॥ श्रीगुरुभ्यो नमः ॥

# ॥ सूत्रार्थामृतलहरी ॥

## ॥ कृष्णावधूतपण्डितविरचिता ॥

## ॥ नामपादः प्रथमः ॥

श्रीकृष्णाय नमश्चिदात्मवपुषे राधामनोभूपुषे
विभ्राजन्नवनीतगोकुलमुषे गोपाङ्गनाह्नमुषे ।
भक्तानां बहुवारपूरिततृषे माराधिकश्रीजुषे
लोकाडम्बरजारचोरविदुषे कंसद्विषे श्रीजुषे ॥

विज्ञाताऽऽशुकविख्यातोऽवधूतः कृष्णनामभाक् ।
यस्य पुत्रस्स भव्याय भूयाद्व्यासः पिता [1]च मे ॥

श्रीमदानन्दतीर्थार्यचरणाम्भोजनिस्सृता ।
स्नपयत्वखिलाङ्गं मां करुणारसधोरणी ॥

सूत्रार्थामृतलहरी
[2]कृष्णावधूतात् समासतः प्रसृता ।
सत्राजिद्भूजानेः
पद्यभिषिक्ता तनोति[3] तत्प्रीतिम् ॥

मोचीभवति विज्ञानां काचीभवति विद्विषाम् ।
साचीकरोति सन्तापं वीची सौत्रामृताम्बुधेः ॥

सङ्क्षेपादपि मद्वाणी मङ्क्षु सर्वावगाहिनी ।
सुधास्वादविधातॄणां सुधीनां सरकायताम् ॥

पूर्वा पूर्वकृतीर्वीक्ष्य सम्प्रदायानुरोधिनी ।
गुरुवाक्यमुपादाय कृतिर्मे स्यात्सतां मुदे ॥

---

1. पिता मम would be a better reading.
2. कृष्णावधूतात् Here the metre breaks down.
3. तनोतु would be a better reading.

मात्सर्यचण्डालसखान्तरङ्गा-
दाभासितब्राह्मणभावभाजाम् ।
पाणिग्रहक्लेशभयात् कृतिं मे
रक्षन्तु सन्तः कृपयेति याचे ॥

आदौ कक्ष्याविभागोऽथ भावोऽधिकरणस्य च ।
सूत्राणि तेषां तात्पर्यं कथ्यते सम्प्रदायतः ॥

अथ नष्टज्ञानेषु साधुषु दयालुभिर्ब्रह्मादिभिरर्थितो नारायणो व्यासत्वेनावतीर्य वेदान् विभज्य तदर्थनिर्णयाय चतुरध्यायीं ब्रह्मसूत्रमीमांसामचीक्लृपत् । तत्र

[1]वेदारिबाणाः सूत्राणि (५६४) रामनेत्रदशो नयाः । (२२३)
कक्ष्यास्तु ब्रह्ममीमांसा शास्त्रेऽत्राष्टोत्तरं शतम् ॥ (१०८)

बुधाऽबुधामोदखेदकारिणी जाड्यहारिणी ।
सूत्रामृतार्थलहरी जीयात्प्राप्तसमन्वया ॥

ब्रह्मशब्दार्थगुणपूर्णत्वसमर्थनाय विष्णौ सर्वशब्दप्रतिपादनात् **प्रथमाध्यायस्य समन्वयाध्याय** इति व्यपदेशः । अत्र

बाणाग्निभूमिसूत्राणि (१३४) चत्वारिंशन्नया अपि (४०)।
अस्मिन् समन्वयाध्याये प्रोक्ताः कक्ष्यास्तु भूदृशः (२९) ॥
तस्य चत्वारः पादाः ।

लोकप्रसिद्धया अन्यत्र रूढानां नामात्मकशब्दानां श्रुतिलिङ्गादिबलाद्विष्णौ समन्वयप्रतिपादनात् **अन्यत्रप्रसिद्धनामपाद** इति **प्रथमस्य**, लोकतोऽन्यत्र प्रसिद्धानां लिङ्गात्मकानां शब्दानां विष्णौ समन्वयप्रतिपादनात् **अन्यत्रप्रसिद्धलिङ्गपाद** इति **द्वितीयस्य**, उभयत्र प्रसिद्धानां नामलिङ्गात्मकानां शब्दानां श्रुत्यादिप्रबलहेतुभिर्विष्णौ समन्वयप्रतिपादनात् **नामलिङ्गपाद** इति **तृतीयस्य**, श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिः विष्णौ समन्वयप्रतिपादनात् **श्रुतिलिङ्गपाद** इति **चतुर्थस्य** च व्यपदेशः ॥

---

1. A similar count or reckoning is to be found in Śrī Vijayīndra Tīrtha's ब्रह्मसूत्रन्यायसंग्रहः (Kumbakonam Sri Vidya Press Edition and Parimala Publications No 2-Nanjangud (1944). *See also* Kali Rangacharya's सिद्धान्तत्रय-ब्रह्मसूत्राधिकरणार्थसंग्रहः– Pudukkottai (1943).

अत्र प्रथमे नामपादे सूत्राण्येकत्रिंशत् । द्वादशाऽधिकरणानि । द्वे कक्ष्ये । प्रथमपञ्चाधिकरणी त्वध्यायपादाकाङ्क्षोत्थापकतया अध्यायपाद-पीठत्वादेका कक्ष्या प्रथमा ॥

ओं 'अथातो ब्रह्मजिज्ञासा' इत्यादिमजिज्ञासाधिकरणे ब्रह्मजिज्ञासायाः सप्रयोजनककर्तव्यत्वसमर्थनम् ॥

'जन्माद्यस्य यतः' इति द्वितीये जन्माधिकरणे जिज्ञास्यब्रह्मणो लक्षणोक्तिः ॥ २ ॥

'शास्त्रयोनित्वात्' इति तृतीयेऽधिकरणे उक्तलक्षणस्य अतिव्याप्तिशङ्का-निरासाय शास्त्रप्रमाणप्रमितत्वोक्तिः ॥ ३ ।

'तत्तु समन्वायात्' इति चतुर्थे समन्वयाधिकरणे उक्तप्रमाणानामन्य-परत्वनिरासाय विष्णौ समन्वयोक्त्या शास्त्रयोनित्वसमर्थनम् ॥ ४ ॥

सप्तसूत्रीक्षत्यधिकरणं पञ्चमं तु समस्तवेदादिमुख्यार्थत्वरूपं "सं"-शब्दार्थं समर्थयति ।

तत्र 'ईक्षतेर्नाऽशब्दम्' इति प्रथमसूत्रे वाच्यत्वसाधकस्य ईक्षणीयत्व-हेतोः कथनम् ।

'गौणश्चेन्नात्मशब्दात्' इति द्वितीयसूत्रे ईक्षणीयत्वहेतोरसिद्धिशङ्कायां पक्षधर्मतासिद्धये ईक्षतिश्रुतेरात्मशब्दोपेतत्वेन शुद्धब्रह्मपरत्वसमर्थनम् ॥

'तन्निष्ठस्य मोक्षोपदेशात्' इति तृतीयसूत्रे गौणस्याप्यात्मशब्दवाच्यत्वेन पुनरसिद्धिरिति शङ्कापरिहारायेक्षणीयात्मनिष्ठस्य मोक्षोपदेशरूपहेतूक्तिः ॥

'हेयत्वावचनाच्च' इति चतुर्थसूत्रे आत्मशब्दवाच्यार्थस्य ब्रह्मत्वेऽहेयत्व-वचनहेयत्वावचनरूपहेतूक्तिः । गौणस्य आत्मत्वाभावे हेयत्वरूपहेतूक्तिश्च ॥

'स्वाप्ययात्' इति पञ्चमे सूत्रे शुद्धब्रह्मणो वाच्यत्वसाधकत्वेनाभिप्रेतस्य श्रुत्युक्तत्वस्य हेतोरसिद्धिशङ्कापरिहाराय तत्साधकस्वाप्ययरूपहेतूक्तिः ॥

'गतिसामान्यात्' इति षष्ठसूत्रे विष्णोः सर्ववेदप्रतिपाद्यत्वरूप"सं"-शब्दार्थसमर्थनम् ॥

'श्रुतत्वाच्च' इति सप्तमसूत्रे परब्रह्मणो वाच्यत्वे संविधाननिरपेक्षश्रुतत्व-रूपहेतुकथनम् ॥ ५ ॥ इति प्रथमा कक्ष्या ॥ १ ॥

[1]षष्ठाधिकरणमारभ्य आपादसमाप्ति सप्ताधिकरणी विष्णावन्यत्र प्रसिद्धनामात्मकशब्दसमन्वयप्रतिपादिका इति द्वितीया कक्ष्या ।

[2]'आकाशस्तल्लिङ्गात्' इत्यष्टमे भूताकाशाधिकरणे भूतवाचकाकाशादि-शब्दानां विष्णौ समन्वयः ॥ ८ ॥

'अत एव प्राणः' इति नवमेऽध्यात्मप्राणाधिकरणे आत्मवाचकप्राणादि-सर्वशब्दानां विष्णौ समन्वयः ॥ ९ ॥

'ज्योतिश्चरणाभिधानात्' इति दशमे सूक्तज्योतिरधिकरणे सूक्तगत-ज्योतिराद्यशेषना(म)समन्वयः ॥ १० ॥

एकादशे त्रिसूत्र्यां गायत्र्यधिकरणेऽपिवेदगतगायत्र्याद्यशेषच्छन्दोनाम-समन्वयः ॥

'छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम्' इति प्रथमसूत्रे उपक्रमवाक्योक्तत्वेन समन्वीयमानशब्दप्रवृत्तिनिमित्तत्वेन च प्राधान्यादनत्राणकर्तृत्वरूपस्वपक्षसाधकोक्तिः ॥

'भूतादिपादव्यपदेशोपपत्तेश्चैवम्' इति द्वितीयसूत्रे उपसंहारे संवा-दितया "त्रिपादस्यामृतम्" इत्युदाहृतमन्त्रोक्तलिङ्गोक्तिः ॥

'उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्' इति तृतीयसूत्रे उक्तार्थे विभक्तिविरोधरूपबाधकपरिहारः ॥ ११ ॥

द्वादशे चतुस्सूत्र्यामन्तर्यामिप्राणाधिकरणे अन्यपरत्वप्रापकश्रुतिलिङ्ग-युतप्राणादिनाम्नां समन्वयः ॥

'प्राणस्तथानुगमात्' इति प्रथमसूत्रे ब्रह्मशब्दात् देवोपास्यत्वादि-रूपस्वपक्षसाधकोक्तिः ॥

---

1. The text relating to आनन्दमयाधिकरण and अन्तःस्थ-त्वाधिकरण is missing.
2. Reconstructed.

'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति द्वितीयसूत्रे लिङ्गापेक्षया वाक्यस्य दुर्बलत्वेऽपि अस्मच्छब्दोत्तमपुरुषवत्तथा प्राणो वाहमस्मीतीन्द्रप्रयुक्तवाक्यस्य निरवकाशतया प्राबल्येन तन्न्यायेनेन्द्रादिप्रापक-श्रुतिलिङ्गानामपि सावकाशत्वाऽसिद्धेर्वाक्यरूपं बाधकमाशङ्क्य तस्यान्तर्या-मिपरतया सावकाशत्वोक्त्या तन्निरासः ॥

'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति तृतीयसूत्रे अन्तर्यामिविवक्षया अहमादिशब्दप्रयोगस्य सदृष्टान्तं समर्थनम् ॥

'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्यो-गात्' इति चतुर्थसूत्रे तृतीयसूत्रोक्तप्रकारेण असिद्धसावकाशरूपाणामपि जीवमुख्यप्राणलिङ्गानामन्तर्यामिविवक्षया कथनस्यान्तरादिभेदेन उपासनात्रैविध्य-रूपप्रयोजनमुक्त्वा एकविद्योपासनयैवापरोक्षसम्भवेऽन्तर्यामित्वोक्तेः स्वरूपकथन-मात्रपरत्वेनाप्युपपत्तेः किमुपासात्रैविध्यादिति प्रयोजनोक्तिरिति शङ्कायां तद्योगादिति तन्निरासहेतुकथनम् ॥ १२ ॥

इति श्रीमध्वसिद्धान्तशिक्षासंसिद्धिशुद्धान्तःकरणकृष्णावधूतपण्डितकृतौ
सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे
प्रथमाध्यायस्य प्रथमः नामपादः समाप्तः

## ॥ अथ लिङ्गपादो द्वितीयः ॥

नामपादनिरूपणानन्तरम् उद्देशक्रमप्राप्तलिङ्गपादस्य अवसरसङ्गतिः । अत्र सूत्राणि द्वात्रिंशत् ॥ ३२ ॥ सप्ताधिकरणानि ॥ ७ ॥ पञ्च कक्ष्याः ॥ ५ ॥ उक्तमनुव्याख्याने ॥[1]

एतद्भावाभिधं लिङ्गं क्रियालिङ्गे ततः परम् ।
अन्तर्याम्यन्तरश्चेति क्रियाभावाद्द्वमुच्यते ॥ १–२–४ ॥

---

1. अनुव्याख्यान-(Kumbakonam) Madhva-Vilasa Book Depot Edition—Page 11.—सर्वमूल.

[1]सङ्क्षेपे च—

सर्वगोऽत्ता नियन्ता च दृश्यत्वाद्युज्झितः सदा ।
विश्वजीवान्तरत्वाद्यैर्लिङ्गैः सर्वैर्युतः स हि ॥ १–४ ॥

अष्टसूत्री प्रथमं सर्वत्र प्रसिद्धाधिकरणमेकं[2] भावाख्यलिङ्गसमन्वय-प्रतिपादकं प्रथमा कक्ष्या ॥ १ ॥

'सर्वत्र प्रसिद्धोपदेशात्' इति प्रथमसूत्रे जातिप्रबलविषयवाक्यगत-श्रुतिरूपस्वपक्षसाधकतोक्तिः ॥

'विवक्षितगुणोपपत्तेश्च' इति द्वितीयसूत्रे 'स योऽतोऽश्रुतः' इत्यादि-तदुत्तरवाक्योक्तलिङ्गरूपसाधकोक्तिः ॥

'अनुपपत्तेस्तु न शारीरः' इति तृतीयसूत्रे सर्वगतत्वस्य समन्वीय-मानयावल्लिङ्गसम्बन्धित्वेन अन्तरङ्गतया जीवस्वरूपभूताणुत्वाविरोधिमहत्त्वसम्ब-न्धितया च प्राबल्यात् तदनुपपत्तिरूपपरपक्षानुपपत्त्युक्तिः ॥

'कर्मकर्तृव्यपदेशाच्च' इति चतुर्थसूत्रे 'आत्मानं परस्मै शंसति' इति वाक्यशेषोक्तबहिरङ्गकर्मकर्तृव्यपदेशानुपपत्तिरूपपरपक्षानुपपत्त्युक्तिः ॥

'शब्दविशेषात्' इति पञ्चमसूत्रे ब्रह्मशब्दादीनाममुख्यत्वादिना साव-काशत्वशङ्कापरिहाराय तन्निरवकाशत्वसाधकोक्तिः ॥

'स्मृतेश्च' इति षष्ठसूत्रे 'अहमात्मा गुडाकेश सर्वभूतान्तरस्थितः' इत्यादि बहिरङ्गसमाख्यारूपस्मृत्युक्तिः ॥

'अर्भकौकस्त्वात्तद्व्यपदेशान्नेति चेन्न निचाय्यत्वादेवं व्योमवच्च' इति सप्तमसूत्रे सर्वेष्विति सर्वभूताशयस्थित इति विषयवाक्यसमाख्यास्मृत्योरुक्तस्या-ल्पौकस्त्वस्यापरिच्छिन्नपरमात्मस्वरूपविरोधित्वेनादित्यश्रुत्याद्यपेक्षया प्राबल्यात् प्रथमं तदाशङ्क्य विषयवाक्यगतादित्यादिश्रुतिं चक्षुर्मयत्वादिलिङ्गमनन्तरमाशङ्क्य तेषां सावकाशत्वोक्तिः ॥

---

1. Madhva-Vilasa-Book Depot (Kumbakonam) Edition P-159.

2. It is known as सर्वगत्वाधिकरण or सर्वगतत्वाधिकरण. (See Kali Rangacharya's मतत्रयसारसंग्रह P—73 and सिद्धान्तत्रयब्रह्मसूत्राधि-करणार्थसंग्रह—P—37.

'सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्' इत्यष्टमसूत्रे बीहरङ्गसम्भोगरूप-बाधकमाशङ्क्य तत्परिहारः ॥ प्रथमा कक्ष्या ॥ १ ॥

द्वितीयं तृतीयमित्यधिकरणद्वयं . क्रियारूपलिङ्गसमन्वयप्रतिपादकमिति द्वितीयकक्ष्या । सूत्रद्वयात्मकेऽत्तृत्वाधिकरणे सर्वात्तृत्वलिङ्गसमन्वयः ॥

'अत्ता चराचरग्रहणात्' इति प्रथमसूत्रे अत्तृत्वसाधकचराचरग्रहण-रूपलिङ्गोक्तिः ॥

'प्रकरणाच्च' इति द्वितीयसूत्रे तदपेक्षया दुर्बलस्य तदुपोद्बलकप्रकरण-स्योक्तिः ॥

सूत्रद्वयात्मके तृतीये गुहाधिकरणे कर्मफलभोक्तृत्वसमर्थनम् ॥

'गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्' इति प्रथमसूत्रे विषयवाक्यगत-लिङ्गरूपसाधकोक्तिः ॥

'विशेषणाच्च' इति द्वितीयसूत्र 'यस्सेतुः' इति तदुत्तरवाक्यगतब्रह्मत्वादि-विशेषणेन द्विवचनश्रुतेः सावकाशत्वोपपादनम् ॥ द्वितीया कक्ष्या ॥ २ ॥

चतुर्थपञ्चमैतदधिकरणद्वयं भावयुक्तक्रियालिङ्गसमन्वयप्रतिपादकमिति तृतीया कक्ष्या ॥

पञ्चसूत्र्यां चतुर्थे अन्तराधिकरणे भावयुक्तरमणरूपक्रियालिङ्गसमन्वयः ॥

'अन्तर उपपत्तेः' इति प्रथमसूत्रे चक्षुरन्तःस्थित्वा रममाणस्य ब्रह्मत्वे 'एतदमृतमभयम्' इत्यादिश्रुत्युक्ताभयत्वादिलिङ्गोक्तिः ॥

'स्थानादिव्यपदेशाच्च' इति द्वितीयसूत्रे 'तद्यदस्मिन् सर्पिर्वा' इति श्रुत्या पूर्वार्थसाधकत्वेन असङ्गत्वादिशक्तिकथनम् ॥

'सुखविशिष्टाभिधानादेव च' इति तृतीयसूत्रे पूर्वोक्तर्थसाधकस्य वैष्णव-त्वसिद्ध्यर्थं 'कं ब्रह्म खं ब्रह्म' इत्याद्युपक्रमवाक्यगतविशिष्टसुखरूपलिङ्गोक्तिः ॥

'श्रुतोपनिषत्कगत्यभिधानाच्च' इति चतुर्थसूत्रे अक्षिस्थविद्याया अग्नि-विद्यात्वात्कथं विष्णूपक्रमेण प्रकरणस्य वैष्णवत्वमिति शङ्कानिरासाय अक्षिस्थ-विद्याया अग्निविषयकत्वाभावे विष्णुविषयकत्वे च श्रुतोपनिषदां पुंसां वायुना विष्णुगमनरूपहेतूक्तिः ॥

'अनवस्थितेरसम्भवाच्च नेतरः' इति पञ्चमसूत्रे अग्निपक्षेऽनवस्थित्यसम्भवरूपबाधकोक्तिः ॥ ४ ॥

सूत्रत्रयात्मके पञ्चमेऽन्तर्याम्यधिकरणे अन्तःस्थितिरूपभावयुक्तनियमनरूपलिङ्गसमन्वयः ॥

'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्' इति प्रथमसूत्रे 'यं पृथिवी न वेद' इत्यादिश्रुतावन्तर्नियमनस्य ब्रह्मधर्मत्वोक्तिहेतुना विष्णोरन्तर्यामित्वसमर्थनम् ॥

'न च स्मार्तमतद्धर्माभिलापात्' इति द्वितीयसूत्रे प्रकृतिजीवयोरन्तर्यामित्वे त्रिगुणत्वादिप्रकृत्यादिधर्माणामन्तर्यामिण्यभावादिति साधकाभावोक्तिः ॥

'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति तृतीयसूत्रे 'आत्मनोऽन्तरः' इत्यादिश्रुत्या प्रकृतान्तर्यामिणो जीवस्य भेदकथनरूपबाधकोक्तिः ॥ ५ ॥
तृतीया कक्ष्या ॥ ३ ॥

सूत्रत्रयात्मकं षष्ठमदृश्यत्वाधिकरणमेकमभावात्मकलिङ्गसमन्वयप्रतिपादकमिति चतुर्थी कक्ष्या ॥

'अदृश्यत्वादिगुणको धर्मोक्तेः' इति प्रथमसूत्रे विष्णोरदृश्यत्वादौ ऋगादिपरविद्याविषयत्वरूपहेतूक्तिः ॥

'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' इति द्वितीयसूत्रे प्रकृतिविरिञ्चरुद्राणाम् अदृश्यत्वादिकथने सर्वज्ञत्वपरतःपरत्वरूपविशेषणस्य 'तस्मादेतद्ब्रह्म' इति 'जुष्टं यदा पश्यति' इत्यादिश्रुत्युक्तभेदस्य च बाधकत्वेन कथनम् ॥

'रूपोपन्यासाच्च' इति तृतीयसूत्रे 'यदा पश्यः पश्यते' इति रुक्मवर्णस्य विष्णुपक्षे साधकत्वेन अविष्णुपक्षे बाधकत्वेन च कथनम् ॥ ६ ॥
चतुर्थी कक्ष्या ॥ ४ ॥

नवसूत्री सप्तमं वैश्वानराधिकरणमेकं पाचकत्वाद्यनेकलिङ्गयुक्तवैश्वानरशब्दसमन्वयप्रतिपादकमिति पञ्चमी कक्ष्या ॥

'वैश्वानरः साधारणशब्दविशेषात्' इति प्रथमसूत्रे 'यस्त्वेतमेवम्' इति श्रुत्युक्तवैश्वानरस्य विष्णुत्वे आत्मशब्दस्य तद्विशेषणत्वोक्तिः ॥

'स्मर्यमाणमनुमानं स्यात्' इति द्वितीयसूत्रे 'अहं वैश्वानरः' इति समाख्यास्मृत्युक्तिः ॥

'शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषविधमपि चैनमधीयते' इति तृतीयसूत्रे 'अयमग्निर्वैश्वानरः' इत्याद्यग्निश्रुतौ वैश्वानरशब्दस्य अग्निशब्दसामानाधिकरण्यादेः विष्णोर्वैश्वानरत्वे बाधकशङ्कायामग्निश्रुत्यादीनां 'दृष्ट्युपदेशात्' इत्यादिना सावकाशत्वं तत्कल्पकात्मशब्दस्यासंभवादिति निरवकाशत्वमुक्त्वा तस्याप्यमुख्यत्वशङ्कानिरासाय 'पुरुषविधम्' इति सावकाशत्वानर्हपुरुषसूक्तसमाख्योक्तिः ॥

'अत एव न देवता भूतं च' इति चतुर्थसूत्रे अग्निनामकदेवताभूतयोर्वैश्वानरत्वाभावे आत्मसामानाधिकरण्योक्तिः ॥

'साक्षादप्यविरोधं जैमिनिः' इति पञ्चमसूत्रे विष्णोर्वैश्वानरत्वे लोकव्यवहाराविरोधशङ्कायां मुख्यत्वोक्त्या परिहारः ॥

'अभिव्यक्तेरित्याश्मरथ्यः' इति षष्ठसूत्रे अग्न्यादिसूक्तादिभिर्ब्रह्मोपासने अग्न्यादावेव ब्रह्माभिव्यक्तेः अग्न्यादिसूक्तादिनियमे हेतुत्वोक्तिः ॥

'अनुस्मृतेर्बादरिः' इति सप्तमसूत्रे तत्तत्सूक्ताद्युपासकैः अग्न्यादिषु चैवं ब्रह्मणोऽनुस्मरणस्य सूक्तादिव्यवस्थाहेतुत्वोक्तिः ॥

'सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति' इत्यष्टमसूत्रे तत्तत्सूक्तोपासकानां तत्तत्प्राप्तिनिमित्तकत्वं सूक्तव्यवस्थाया इत्यर्थे 'तं यथा यथोपासते' इत्यादिश्रुत्युक्तिः ॥

'आमनन्ति चैनमस्मिन्' इति नवमसूत्रे ब्रह्मोपासकैस्तावदग्न्यादिप्राप्तिः कथमिति शङ्कायां 'तं यथा यथोपासते' इत्यादिश्रुतेः 'योऽग्नौ तिष्ठन्' इत्यादिप्राप्तिपदेन तद्गतब्रह्मप्राप्तिविवक्षेति परिहारः ॥ ७ ॥ इति पञ्चमी कक्ष्या ॥ ५ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे प्रथमाध्यायस्य द्वितीयः
लिङ्गपादः समाप्तः ॥

## ॥ अथ नामलिङ्गपादस्तृतीयः ॥

अस्यैवोभयत्रप्रसिद्धपाद इति प्रसिद्धिः । अत्र सूत्राणि त्रिचत्वारिंशत् ॥ ४३ ॥ चतुर्दशाधिकरणानि ॥ १४ ॥ सप्त कक्ष्याः ॥ ७ ॥ तत्र सप्तसूत्री द्युभ्वाद्यधिकरणमेकं द्युभ्वाद्यायतनत्वलिङ्गसमन्वयप्रतिपादकमिति प्रथमा कक्ष्या ॥

'द्युभ्वाद्यायतनं स्वशब्दात्' इति प्रथमसूत्रे 'यस्मिन् द्यौः' इति विषयवाक्येऽतिसन्निहितात्मशब्दरूपस्वपक्षसाधकोक्तिः ॥

'मुक्तोपसृप्यव्यपदेशात्' इति द्वितीयसूत्रे आत्मशब्दस्यामुख्यार्थत्वशङ्का-निरासाय 'अमृतस्यैष सेतुः' इति तदुत्तरवाक्यगतमुक्तप्राप्यत्वलिङ्गरूपसाधकोक्तिः ॥

'नानुमानमतच्छब्दात्'इति तृतीयसूत्रे रुद्रविषयसमाख्याश्रुतीनां समन्वीय-मानबहुलिङ्गविषयत्वेन तत्साधकश्रुतिलिङ्गबाहुल्योपेतत्वेन अनेकत्वेन च प्राबल्यात्त-त्पक्षस्यात्युल्बणत्वेन प्रथमानिरस्यत्वे रुद्रपरानुमानपदेन प्रकृतेरपि ग्रहणसम्भवात् युगपत्तदुभयपक्षे साधकाभावोक्तिः ॥

'प्राणभृच्च' इति चतुर्थसूत्रे जायमानत्वलिङ्गमात्रस्य जीवपक्षसाधकत्वेन तन्निरासस्य प्रधानादिनिरासानन्तर्याज्जीवब्रह्माभेदस्येव प्रधानब्रह्माभेदस्य शङ्काविषयत्वाभावेन भेदप्रतिपादकस्योत्तरसूत्रस्य जीवाभेदनिरासकत्वेनैवान्वयाच्च योगविभागस्यावश्यकत्वेन जीवपरप्राणभृच्छब्देन समुच्चयार्थकचकारेण वायोरपि ग्रहणसम्भवात् जीववायूभयपक्षे साधकाभावोक्तिः ॥

'भेदव्यपदेशात्' इति पञ्चमसूत्रे जीवब्रह्माभेदेन जीवब्रह्मत्वाऽभावसाध-कोभयविरोधः, अतोऽन्यतरेण अन्यतरबाधो न युक्त इति शङ्कानिरासाय जीवब्रह्मभेदे 'अन्यमीशम्' इति भेदव्यपदेशरूपसाधकोक्तिः ॥

'प्रकरणात्' इति षष्ठसूत्रे भेदव्यपदेशस्य अन्यविषयत्वशङ्कानिरासाय तत्प्रकरणस्य ब्रह्मपरत्वोक्तिः ॥

'स्थित्यदनाभ्यां च' इति सप्तमसूत्रे जीवेश्वरभेदे लिङ्गरूपसाध-कान्तरोक्तिः ॥ इति प्रथमा कक्ष्या ॥ १ ॥

द्वितीयं तृतीयं चतुर्थमित्यधिकरणत्रयी शब्दसमन्वयप्रतिपादनीति द्वितीया कक्ष्या ॥

सूत्रद्वयात्मके द्वितीये भूमाधिकरणे भूमशब्दसमन्वयप्रतिपादनम् ॥

'भूमा सम्प्रसादादध्युपदेशात्' इति प्रथमसूत्रे भूम्नो विष्णुत्वे 'यो वै भूमा' इति विषयवाक्यगतसुखरूपत्वोपक्रमस्थत्वाद्युपदेशरूपहेतोरुक्तिः ॥

'धर्मोपपत्तेश्च' इति द्वितीयसूत्रे 'स एव अधस्तात्' इत्यादितदुत्तरवाक्यगतसर्वगतत्वादिरूपहेतूक्तिः ॥ २ ॥

त्रिसूत्र्यां तृतीयेऽक्षराधिकरणे अक्षरशब्दसमन्वयः ॥

'अक्षरमम्बरान्तधृतेः' इति प्रथमसूत्रे विषयवाक्यस्य सर्वाधारत्वलिङ्गोक्तिः ॥

'सा च प्रशासनात्' इति द्वितीयसूत्रे कैमुत्येन साधकोपेतप्रशासनकर्तृत्वलिङ्गोक्तिः ॥

'अन्यभावव्यावृत्तेश्च' इति तृतीयसूत्रे स्वपक्षसाधकपरपक्षबाधकरूपप्राकृतस्थौल्यादिराहित्यलिङ्गोक्तिः ॥ ३ ॥

'ईक्षतिकर्मव्यपदेशात्सः' इति चतुर्थे सदधिकरणे सच्छब्दसमन्वयः समर्थितः । इति द्वितीया कक्ष्या ॥ ४ ॥ २ ॥

पञ्चमं षष्ठं चेत्यधिकरणद्वयी लिङ्गसमन्वयरूपैकार्थप्रतिपादिकेति तृतीया कक्ष्या ॥

सूत्राष्टके पञ्चमे दहराधिकरणे हृत्पद्मस्थलिङ्गसमन्वयः । ईशे अंशस्यापि व्याप्तता ॥

'दहर उत्तरेभ्यः' इति प्रथमसूत्रे विषयवाक्यसन्निहितवाक्यगतात्मशब्दापहतपाप्मत्वादिलिङ्गरूपस्वपक्षसाधकोक्तिः ॥

'गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च' इति द्वितीयसूत्रे तदुत्तरवाक्यगतसुप्तप्राप्यत्वादिलिङ्गब्रह्मशब्दरूपसाधकान्तरोक्तिः । 'अरश्च ह वै ण्यश्च' इति वाक्यस्य 'धृतेश्च' इति उत्तरसूत्रोपात्तात्' 'अथ य आत्मा स सेतुर्विधृतिः' इति वाक्यादुत्तरत्वेऽपि 'एतं ब्रह्मलोकम्' इति पूर्ववाक्योक्तहेतुप्रतिपादकत्वादेव (दवसरप्राप्त) तदुक्तलिङ्गोक्तिः ॥

'धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः' इति तृतीयसूत्रे तदुत्तरवाक्यगत-सर्वाधारत्वलिङ्गस्य वाजसनेयसमाख्यायाश्चोक्तिः। 'महिम्नोऽस्यास्मिन्नुपलब्धेः' इति समाख्याप्रतिपादकसूत्रांशेन सर्वांशेन सर्वाधारत्वलिङ्गस्य हृत्पद्मस्थत्वस्याप्युप-पादनात् तल्लिङ्गसाहित्येन तत्समाख्योक्तिः ॥

'प्रसिद्धेश्च' इति चतुर्थसूत्रे तैत्तिरीयसमाख्यया परमात्मनो हृत्पद्मगत-दहराकाशस्थत्वेन हृत्पद्मस्थत्वप्रतिपादनात् तदुक्तौ सुषिरश्रुतिविरोधशङ्कायां तत्रापि 'दहरम्' इत्यनेन तदुद्धारस्योपलक्षणतयान्वयाभावलक्षणबाधकोद्धारस्य चाकाशपक्षे अन्वयाभावरूपपरपक्षबाधकस्य च सूचनात् सर्वसाधकोक्त्यनन्तरं तदुक्तिः ॥

'इतरपरामर्शात्स इति चेन्नासम्भवात्' इति पञ्चमसूत्रे हृत्पद्मस्थस्य जीवत्वसाधकत्वेन 'एष आत्मा' इति परामर्शमाशङ्क्य तस्य जीवविषयत्वे बाधकोक्तिः ॥

'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इति षष्ठसूत्रे असम्भवरूपबाधकस्य पूर्व-सूत्रोक्तस्य असिद्धिमाशङ्क्य तस्य जीवे विद्यमानत्वसाधनात्तत्परिहारः ॥

'अन्यार्थश्च परामर्शः' इति सप्तमसूत्रे 'एष आत्मा' इति परामर्शस्य विष्णुविषयत्वोक्तिः ॥

'अल्पश्रुतेरिति चेत्तदुक्तम्' इत्यष्टमसूत्रे हृत्पद्मस्थस्य विष्णुत्वे बाधकतया जीवत्वे साधकतया अल्पस्थानस्थितत्वलिङ्गमाशङ्क्य तस्य 'निचाय्यत्वात्' इति पूर्वोक्तयुक्तिस्मारणेन श्रुतिरूपविशेषप्रमाणोपन्यासेन च विष्णौ सावकाशत्वोक्तिः ॥ ५ ॥

सूत्रद्वयात्मके षष्ठेऽनुकृतिनये आनुकूल्येन गृह्यमाणत्वलिङ्गसमन्वयः ॥

'अनुकृतेस्तस्य च' इति प्रथमसूत्रे जगत्प्रकाशकसूर्यादिनियाम-कत्वसकलजगत्प्रकाशकत्वरूपलिङ्गोक्तिः ॥

'अपि स्मर्यते' इति द्वितीयसूत्रे तल्लिङ्गद्वयस्य 'न तत्र' इत्युक्तसूर्याद्यप्र-काश्यत्वरूपलिङ्गान्तरस्य च विष्णुमात्रनिष्ठत्वे श्रुतिस्मृतिप्रमाणोक्तिः ॥ ६ ॥
इति तृतीया कक्ष्या ॥ ३ ॥

सूत्रद्वयात्मकं सप्तमं वामनाधिकरणमेकं ईशानशब्दसमन्वयप्रतिपादकमिति चतुर्थी कक्ष्या ॥

'शब्दादेव प्रमितः' इति प्रथमसूत्रे ईशानशब्दस्य विष्णुपरत्वरूपस्वपक्षसाधकोक्तिः ॥

'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति द्वितीयसूत्रे ईशानस्य विष्णुत्वे अपरिच्छिन्नस्याङ्गुष्ठमात्रत्वं बाधितमिति शङ्कायां तदुद्धारः । इति चतुर्थी कक्ष्या ॥ ७ ॥ ४ ॥

अष्टमनवमाधिकरणद्वयं प्रसङ्गप्राप्तवेदविद्याधिकाररूपैकार्थप्रतिपादकमिति पञ्चमी कक्ष्या । सूत्राष्टकेऽष्टमे देवताधिकरणे देवानां वेदविद्याधिकारसमर्थनम् ॥

'तदुपर्यपि बादरायणस्संभवात्' इति प्रथमसूत्रे 'तदुपरि' इत्यनेन पदप्राप्त्यनन्तरम् 'अपि' पदेन पूर्वमपि देवानामधिकारं प्रतिज्ञाय तत्र 'सम्भवात्' इत्यनेन अधिकारसम्भवरूपहेतोस्तत्साधकविशिष्टबुद्ध्यादिसद्भावरूपहेतोश्च कथनम् ॥

'विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्' इति द्वितीयसूत्रे पूर्वत्र 'तदुपरि' इत्यनेन देवतापदस्य सादित्वोक्तौ पूर्वं देवतोद्दिष्टकर्मवैयर्थ्यमाशङ्क्य 'यज्ञेन यज्ञमयजन्त' इति श्रुतिबलेन तत्पूर्वमन्येषां तत्पदप्राप्त्यभ्युपगमेन तत्परिहारः ॥

'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' इति तृतीयसूत्रे पूर्वसूत्रोपात्तया 'ते ह नाकम्' इति श्रुत्या देवतापदस्यानित्यत्वस्याभ्युक्तत्वात् सदा देवतासत्त्वप्रतिपादकवेदस्य अप्रामाण्यापत्तिरूपविरोधमाशङ्क्य श्रुत्याद्यवष्टम्भेन देवताप्रवाहनित्यत्वाभ्युपगमेन तत्परिहारोक्तिः ॥

'अत एव च नित्यत्वम्' इति चतुर्थसूत्रे देवताप्रवाहस्य अनादिनित्यत्वे 'शब्द इति चेत्' इति पूर्वसूत्रांशसूचितवेदानादिनित्यत्वरूपयुक्तिकथनम् ॥

'समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च' इति पञ्चमसूत्रे श्रुत्यादिबलेन देवताप्रवाहस्य अनादिनित्यत्वे सिद्धेऽपि तेषां देवानां प्रतिकल्पं भिन्नभिन्ननामरूपवत्त्वे एकप्रकारेण तत्प्रतिपादकवेदाप्रामाण्यं तदवस्थमित्याशङ्कापरिहाराय श्रुत्याद्यवष्टम्भेन देवानां सर्वकल्पेषु समानरूपवत्त्वोक्तिः ॥

'मध्वादिष्वसम्भवादनधिकारं जैमिनिः' इति षष्ठसूत्रे सामान्यतो देवानां वेदविद्याधिकारे साधित एव विद्याविशेषविषयापेक्षावसर इति मोक्षेतर-फलकब्रह्मकर्मविद्यासु देवानामधिकाराक्षेपः ॥

'ज्योतिषि भावाच्च' इति सप्तमसूत्रे मोक्षेतरवस्वादिपदादेः प्राप्तत्वेन वस्वादिदेवानां तत्फलकविद्यास्वधिकारासम्भवेऽप्यसिद्धमोक्षफलकविद्यास्वधिकारः सम्भवतीति सिद्धान्त्यभिसन्धिनिरासाय देवानामपरोक्षज्ञानित्वेन मोक्षस्यापि प्राप्तप्रायत्वेन तद्विद्यास्वप्यधिकाराक्षेपः ॥

'भावं तु बादरायणोऽस्ति हि' इत्यष्टमसूत्रे तु प्राप्तव्यज्ञानमोक्षविशेष-सत्त्वेन तदर्थितया सर्वविद्यास्वप्यधिकारोक्त्या सूत्रद्वयोक्ताक्षेपद्वयपरिहारोक्तिः ॥८॥

पञ्चसूत्रात्मके नवमेऽपशूद्राधिकरणे त्रिवर्णेतरेषां वेदविद्याधिकारा-भावसमर्थनम् ॥

'शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि' इति प्रथमसूत्रे पौत्रायणकर्तृकवेदविद्याविचारस्य पूर्वपक्षसाधकविशिष्टबुध्यादिमत्त्वोपोद्बलकतया शूद्रस्य वेदविद्याधिकारे लिङ्गत्वनिरासाय पौत्रायणस्य शूद्रत्वाभावसिद्ध्यर्थं 'हारेत्वा शूद्र' इति वाक्यस्थशूद्रशब्दस्य यौगिकत्वोक्तिः ॥

'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्' इति द्वितीयसूत्रे श्रौतशूद्र-शब्दस्य यौगिकत्वकल्पकस्य रूढिबाधकस्य पौत्रायणक्षत्रियत्वसाधकवाक्यशेषस्थ-चित्ररथित्वरूपलिङ्गस्योक्तिः ॥

'संस्कारपरामर्शात्तदभावाभिलापाच्च' इति तृतीयसूत्रे शूद्रे रथित्वाभाव-सिद्ध्यर्थं रथित्वव्यापकवेदाध्ययनप्रयोजकोपनयनादिसंस्कारस्य श्रुत्यवष्टम्भेना-भावोक्तिः ॥

'तदभावनिर्धारणे च प्रवृत्तेः' इति चतुर्थसूत्रे पूर्वसूत्रोक्तस्य शूद्रस्यो-पनयनादिसंस्काराभावाभिलापस्य शूद्रे तन्निषेधनिबन्धनत्वसिद्ध्यर्थमुपनयनादि-संस्कारकरणे शूद्रत्वाभावनिश्चयेन प्रवृत्तिरूपलिङ्गोक्तिः ॥

'श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च' इति पञ्चमसूत्रे विशिष्टबुद्ध्यादि-मत्त्वरूपयुक्तेर्न केवलमुपोद्बलकाभावेन दौर्बल्यम्, किं त्वनिषिद्धत्वसहित-विशिष्टबुद्ध्यादिमत्त्वरूपोपाधिग्रस्तत्वेनापीत्याशयेन उपाधेः पक्षाव्यावृत्तत्वासिद्धये शूद्रस्य वेदश्रवणाध्ययनादेर्निषेधकप्रमाणोक्तिः ॥ ९ ॥ इति पञ्चमी कक्ष्या ॥ ५ ॥

दशमैकादशद्वादशैतदधिकरणत्रयं शब्दसमन्वयरूपैकार्थप्रतिपादकमिति षष्ठी कक्ष्या ॥

'कम्पनात्' इति दशमे वज्राधिकरणे वज्रशब्दसमन्वयः ॥ १० ॥

'ज्योतिर्दर्शनात्' इत्येकादशे जीवज्योतिराधिकरणे ज्योतिर्नामसमन्वयः ॥ ११ ॥

'आकाशोऽर्थान्तरत्वादिव्यपदेशात्' इति द्वादशे अव्याकृताकाशाधिकरणे आकाशशब्दसमन्वयः ॥ १२ ॥ इति षष्ठी कक्ष्या ॥ ६ ॥

त्रयोदशाचतुर्दशात्मकमधिकरणद्वयमभेदभेदाभ्यां पूर्वपक्षसिद्धान्तयोः समर्थनपरम् इति सप्तमी कक्ष्या ॥

'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति त्रयोदशे सुषुप्त्यधिकरणे जीवेशाभेदेन पूर्वपक्षे तद्भेदेन सिद्धान्ते स्वप्नादिद्रष्टृत्वलिङ्गसमन्वयः ॥ १३ ॥

'पत्यादिशब्देभ्यः' इति चतुर्दशे पत्यधिकरणे विरिञ्चेश्वरयोरभेदेन पूर्वपक्षे तद्भेदेन सिद्धान्ते ब्राह्मणनामसमन्वयः ॥ १४ ॥ इति सप्तमी कक्ष्या ॥ ७ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे प्रथमाध्यायस्य तृतीयः नामलिङ्गपादः समाप्तः ॥

## ॥ अथ श्रुतिलिङ्गपादश्चतुर्थः ॥

अयमेवान्यत्रैव प्रसिद्धपाद इति[1] । अत्र सूत्राण्येकोनत्रिंशत् ॥ २९ ॥ सप्ताधिकरणानि ॥ ७ ॥ सप्त कक्ष्याः ॥ ७ ॥

[2]अव्यक्तः कर्मवाक्यैश्च वाच्य एकोऽमितात्मकः ।
अवान्तरं कारणं च प्रकृतिः शून्यमेव च ॥

इति सङ्क्षेपोक्तेः ॥

[3]विरोधिसर्वबाहुल्यकारणत्वनिषेधिनाम् ।
पृथक् समन्वयार्थानि स्थानान्येतानि सर्वशः ॥

1. The predicate is missing. It may be व्यपदिश्यते ।
2. अणुभाष्य 1—7 and 8.
3. अनुव्याख्यान-P—174-opening line. सर्वमूल Kumbakonm Edition.

इत्यनुव्याख्यानोक्तेश्च ॥

तत्र सूत्रनवकात्मके [1]अनुमानाधिकरणे प्रथमे ऐश्वर्यविरोध्यवरत्व-दुःखित्वाद्यर्थकशब्दसमन्वयः ॥ इति प्रथमा कक्ष्या ॥

'आनुमानिकमप्येकेषाम् इति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इति प्रथमसूत्रे विष्णोरव्यक्तादिशब्दमुख्यार्थत्वप्रतिज्ञापूर्वकं तत्सद्भावक-श्रौतस्मार्तप्रयोगरूपहेतूक्तिः ॥

'सूक्ष्मं तु तदर्हत्वात्' इति द्वितीयसूत्रे प्रवृत्तिनिमित्तातिशययोग-रूपहेतूक्तिः ॥

'तदधीनत्वादर्थवत्' इति तृतीयसूत्रे स्वपक्षे परत्वावधित्वात्मक-पञ्चम्याद्याक्षिप्तावरत्वाद्ययोगेन पञ्चम्यादेर्व्यर्थत्वापत्तिरूपबाधकोद्धारः ॥

'ज्ञेयत्वावचनाच्च' इति चतुर्थसूत्रे परपक्षबाधकस्य तदर्थसिद्धस्वपक्ष-साधकस्य चोक्तिः ॥

'वदतीति चेन्न प्राज्ञो हि' इति पञ्चमसूत्रे 'महतः परम्' 'ध्रुवम्' इत्यादिना मुमुक्षुभिरभिज्ञेयत्वेन प्रधानस्येत्याक्षेपपरिहारः ॥

'प्रकरणात्' इति षष्ठसूत्रे 'प्राज्ञो ही'ति पूर्वसूत्रे विष्णुप्रकरणरूपहेतूक्तिः ॥

'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सप्तमसूत्रे'ऽनाद्यनन्तम्' इति वाक्यस्य प्रधानपरत्वाभावे परमात्मपरत्वे च प्रधानव्यतिरिक्तपरमात्मादीनामेव प्रश्नोपन्यासरूपहेतूक्तिः ॥

'महद्वच्च' इत्यष्टमसूत्रे पूर्वपक्षसाधकप्रसिद्धेर्मुख्यत्वं प्रत्यप्रयोजकत्वे महच्छब्दरूपदृष्टान्तोक्तिः ॥

'चमसवदविशेषात्' इति नवमसूत्रे मुख्यत्वसम्भावकशक्तिमत्त्वेऽनुशासन-स्यैव प्रयोजकत्वं न प्रसिद्धेरित्यत्र चमसशब्दरूपदृष्टान्तोक्तिपूर्वकमव्यक्तादिशब्दानां विष्णौ शक्तिसाधकश्रुतिरूपानुशासनोक्तिः ॥ १ ॥ इति प्रथमा कक्ष्या ॥ १ ॥

सूत्रद्वयात्मकं द्वितीयं कर्मज्योतिरधिकरणमेकं शब्दानां वर्णपदादिरूपेण समन्वयं प्रतिपादयतीति द्वितीया कक्ष्या ॥

---

1. आनुमानिकाधिकरण seems better.

'ज्योतिरूपक्रमात्तु तथा ह्यधीयत एके' इति प्रथमसूत्रे स्वपक्षसाधकैतरेयोक्तत्वोक्तिः ॥

'कल्पनोपदेशाच्च मध्वादिवदविरोधः' इति द्वितीयसूत्रे स्वपक्षे लोकक्लृप्तकर्मक्रमव्यवहारादिविरोधरूपबाधकपरिहारः ॥ २ ॥ इति द्वितीया कक्ष्या ॥ २॥

त्रिसूत्र्यात्मकं तृतीयं न सङ्ख्योपसङ्ग्रहाधिकरणमेकं बहुत्ववाचिशब्दसमन्वयप्रतिपादकमिति तृतीया कक्ष्या ॥

'न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च' इति प्रथमसूत्रे 'तथा ह्यधीयत एके' इति पूर्वोक्तयुक्त्यैव पञ्चजनादिशब्दानां नारायणे समन्वयं सिद्धवत्कृत्य तत्राशङ्कितबहुत्वादिविरोधपरिहारः ॥

'प्राणादयो वाक्यशेषात्' इति द्वितीयसूत्रे पञ्चजनानां विष्णुत्वनिश्चायकप्राणप्राणप्रदत्वादिलिङ्गोक्तिः ॥

'ज्योतिषैकेषामसत्यन्ने' इति तृतीयसूत्रे 'यस्मि पञ्च पञ्चजना' इति वाक्यस्य वाक्यशेषसमानार्थत्वलाभाय वाक्यशेषस्य ज्योतिषा सह रूपपञ्चकप्रतिपादकत्वोक्तिः ॥ ३ ॥ इति तृतीया कक्ष्या ॥ ३ ॥

'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः' इति चतुर्थे कारणत्वाधिकरणमेकं हरे रूपभेदेन व्यङ्ग्यव्यञ्जकत्वरूपार्थान्तरकारणत्वलिङ्गसमन्वयप्रतिपादकम् ॥ इति चतुर्थी कक्ष्या ॥ ४ ॥

सूत्राष्टकात्मकं समाकर्षाधिकरणमेकं पञ्चमं सर्वशब्दानां, न्यायभेदेन विष्णौ समन्वयं प्रतिपादयतीति पञ्चमी कक्ष्या ॥

'समाकर्षात्' इति प्रथमसूत्रे आकाशादिसर्वशब्दानामन्वयरूढ्यादिमुख्यवृत्त्यङ्गीकारे परमेश्वरवदन्येषामपि तत्तच्छब्दमुख्यार्थत्वं स्यादित्याशङ्कापरिहारायेशापेक्षयान्येषां तत्तच्छब्दवाच्यत्वोक्तिः ॥

'जगद्वाचित्वात्' इति द्वितीयसूत्रे शब्दानां परमात्मनि मुख्यार्थत्वे जगत्यमुख्यार्थत्वे शब्दप्रसिद्धिः परमात्मन्येव स्यात् न जगतीति शङ्कानिरासाय जगति शब्दप्रसिद्धेरन्यथासिद्ध्युक्तिः ॥

'जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम्' इति तृतीयसूत्रे परमात्मनः शब्दमुख्यार्थत्वे निमित्तत्वेनाभिप्रेतस्य तत्तच्छब्दवाच्यार्थनियामकत्वस्य अन्यनिष्ठत्वमाशङ्क्य परिहारः ॥

'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' इति चतुर्थसूत्रे एवं ब्रह्मजगतोः शब्दमुख्याऽमुख्यार्थत्वव्यवस्थितौ अमुख्यार्थत्वविवक्षया वैदिकशब्दानां कर्माद्यन्यपरत्वस्य ब्रह्मज्ञानरूपप्रयोजनोक्तिः ॥

'वाक्यान्वयात्' इति पञ्चमसूत्रे प्रतिपदसमन्वयेनैव ब्रह्मज्ञानसिद्धेः कर्माद्युक्तिः व्यर्थेति शङ्कापरिहाराय मन्दाधिकारिणां ब्रह्मज्ञानाय तदुक्तेरावश्यकत्वे वाक्यान्वयरूपहेतूक्तिः ॥

'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' इति षष्ठसूत्रे पृथक्पृथगर्थेषु प्रतिपादकतया स्थितस्य वाक्यस्यान्ततो भगवत्परत्वरूपवाक्यान्वयः केन प्रकारेणेत्याकाङ्क्षायां मोक्षस्य ब्रह्मज्ञानैकसाध्यत्वप्रतिज्ञायां क्षयिष्णुफलकर्मादिलिङ्गत्वोक्त्या कर्मादिवचनस्य ब्रह्मज्ञानार्थत्वोक्तिः ॥

'उत्क्रमिष्यत एवं भावादित्यौडुलोमिः' इति सप्तमसूत्रे मोक्षार्थं ज्ञानमपेक्षितमिति सिद्धे तत्केन साधनेनेत्याकाङ्क्षायां कर्मणां ब्रह्मज्ञानसाधनत्वोक्त्या प्रकारान्तरेण कर्माद्युक्तेर्ब्रह्मज्ञानार्थत्वोक्तिः ॥

'अवस्थितेरिति काशकृत्स्नः' इत्यष्टमसूत्रे मोक्षार्थमावश्यकं ज्ञानं कर्मादिनान्तःकरणशुद्ध्या भवतीति सिद्धं तज्जन्यं ज्ञानं किंप्रकारकमित्यपेक्षायां कर्मादिसर्वाधारत्वप्रकारकमित्यभिप्रेत्य वेदे आग्नेयकर्माद्युक्तिरिति प्रकारान्तरेण कर्माद्युक्तेर्ब्रह्मज्ञानार्थत्वोक्तिः ॥ इति पञ्चमी कक्ष्या ॥ ५ ॥

सूत्रपञ्चकात्मकं षष्ठं प्रकृत्यधिकरणमेकमेकस्मिन् रूपे स्त्रीत्वपुंस्त्वसमावेशेन हरौ समन्वयप्रतिपादकमिति षष्ठी कक्ष्या ॥

'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति प्रथमसूत्रे 'हन्तैतम्' इति श्रुतेः 'यथा नद्यः' इति दृष्टान्तेनोपपादनात् 'नामानि सर्वाणि' इत्यतो विशेषश्रुतिसत्त्वाद्विष्णोः स्त्रीलिङ्गशब्दवाच्यत्वे तद्रूपविशेषप्रमाणोक्तिः ॥

'अभिध्योपदेशाच्च' इति द्वितीयसूत्रे इच्छाद्वारा प्रकृतिशब्दवाच्यत्व विष्णोरित्यत्र 'मायां तु प्रकृतिं विद्यात्' इति प्रमाणोक्तिः ॥

'साक्षाच्चोभयाम्नानात्' इति तृतीयसूत्रे विष्णोः प्रकृत्यादिशब्द-वाच्यत्वे [1]साक्षाददद्वैतमितिवत् साधारण्यं विना...यात्विितवदिच्छाद्वारकत्वं विना एष ह्येष पुरुष इति स्पष्टप्रमाणोक्तिः ॥

'आत्मकृतेः परिणामात्' इति चतुर्थसूत्रे विष्णोः सर्वस्त्रीलिङ्गशब्दो-पलक्षकप्रधानस्त्रीवाचकप्रकृतिशब्दवाच्यत्वे तन्निर्वचनलभ्यप्रवृत्तिनिमित्तोक्तिः ॥

'योनिश्च हि गीयते' इति पञ्चमसूत्रे विष्णौ सर्वस्त्रीलिङ्गशब्दप्रवृत्ति-निमित्तकत्वोक्त्या तदभावरूपबाधकपरिहारः ॥ इति षष्ठी कक्ष्या ६ ॥

'एतेन सर्वे व्याख्याता व्याख्याताः' इत्येतेन सर्वेव्याख्याताधिकरणमेकं शून्यासदादिनिषेधार्थशब्दसमन्वयप्रतिपादकम् ॥ इति सप्तमी कक्ष्या ॥ ७ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे प्रथमाध्यायस्य चतुर्थः श्रुतिलिङ्गपादः समाप्तः ॥

# ॥ अथ द्वितीयोऽध्यायः ॥

अभीष्टान्वयसम्भूतविरोधपरिहारिणी ।
'सूत्रामृतार्थलहरी' द्वितीयाध्यायमाश्रिता ॥

'अथातो ब्रह्मजिज्ञासा' इत्यत्र ब्रह्मशब्दार्थगुणपूर्णत्वसमर्थनाय प्रवृत्ते प्रथमेऽध्याये सर्वशब्दानां परममुख्यवृत्त्या विष्णौ समन्वये प्रतिपादिते सति तत्र युक्त्यादिभिर्विरोधशङ्कायां तत्परिहारार्थमयमध्याय आरब्ध इति विरोधे परिहृत एव समन्वयसिद्धेः पूर्वाध्यायार्थस्य समन्वयस्योपजीवकत्वं एतदध्या-यार्थस्य विरोधपरिहारस्योपजीव्यत्वमिति पूर्वाध्यायेनास्योपजीव्योपजीवकभावः सङ्गतिः । अत एवास्याऽविरोधाध्याय इति व्यपदेशः ।

[2]सूत्राणि वसुपञ्चक्ष्माः ॥ १५८ ॥ पञ्चपञ्चनया अपि ॥ ५५ ॥

---

1. साक्षाद्ध "न्तत" मितिवत्साधारण्यं विना 'मायां त्वि" तिवदिच्छाद्वारकत्वं विना—Reconstructed.

2. Here is apparently an error in count. The number of sutras as detailed in each quarter would total to 159. But the total as found in the manuscript is 158. There seems to be a way of reconciliation. If वसु which is generally taken to indicate 8 is taken as symbolical of 9 in the light of नवरत्न, the count is all right.

अविरोधे द्वितीयेऽत्राध्याये कक्ष्यास्तु विंशतिः ॥ २० ॥

युक्तिमूलत्वेन समयमूलत्वेन श्रुतिमूलत्वेन युक्त्युपेतश्रुमिमूलत्वेन च चतुर्विधानामपि क्रमेण पादचतुष्टये निरासात् प्रथमपादस्य युक्तिपाद इति द्वितीयस्य समयपाद इति तृतीयस्य श्रुतिपाद इति चतुर्थस्य युक्तिमच्छ्रुतिपाद इति च प्रसिद्धिः ॥

युक्तिपादे प्रथमे सूत्राण्यष्टत्रिंशत् ॥ ३८ ॥ एकादशाधिकरणानि ॥ ११ ॥ पञ्च कक्ष्याः ॥ ५ ॥

सूत्रत्रयात्मकं प्राथमिकं स्मृत्यधिकरणमेकं स्मृतिविरोधनिरासकमिति प्रथमा कक्ष्या ॥

**'स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोषप्रसङ्गात्'** इति प्रथमसूत्रे विष्णोर्जगत्कारणत्वादौ पाशुपतादिस्मृतिविरोधमाशङ्क्य पाञ्चरात्रादिस्मृतिभिस्तासामप्रामाण्योक्त्या तत्परिहारः ॥

**'इतरेषां चानुपलब्धेः'** इति द्वितीयसूत्रे आप्तोक्तानां पाशुपतादिस्मृतीनां कथमप्रामाण्यमित्याशङ्कापरिहाराय आप्तोक्तत्वाऽभावसिद्ध्यर्थं तदुक्तार्थे संवादाभावोक्तिः ॥

**'एतेन योगः प्रत्युक्तः'** इति तृतीयसूत्रे योगादिस्मृत्युक्तार्थे द्वितीयसूत्रोक्तसंवादाभावातिदेशेन आप्तोक्तत्वनिरासः ॥ इति प्रथमा कक्ष्या ॥ १ ॥

द्वितीयतृतीयैतदधिकरणद्वयं वेदप्रामाण्ययुक्तिविरोधनिरासकत्वेन द्वितीया कक्ष्या ॥

सूत्रद्वयात्मके 'न विलक्षणत्व' अधिकरणे युक्तिमात्रविरोधनिरासः ॥

**'न विलक्षणत्वादस्य तथात्वं च शब्दात्'** इति प्रथमसूत्रे श्रुत्यादिप्रामाण्यरूपस्वपक्षसाधनम् ॥

**'दृश्यते तु'** इति द्वितीयसूत्रे निष्फलार्थकत्वरूपबाधकपरिहारः ॥

सूत्रद्वयात्मकेऽभिमान्यधिकरणे तृतीये दृढयुक्तिविरोधनिरासः ॥

**'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्'** इति प्रथमसूत्रे 'मृदब्रवीदापोऽब्रुवन्' इत्यादिश्रुतावभिमानिदेवताव्यपदेशे शक्तिव्याप्तिरूपहेतूक्तिः ॥

'दृश्यते च' इति द्वितीयसूत्रेऽभिमानिदेवतानां तत्सामर्थ्यस्य च महद्भिर्दृश्यमानत्वरूपहेतुकथनम् ॥ इति द्वितीया कक्ष्या ॥ २ ॥

चतुर्थं पञ्चमं चेत्यधिकरणद्वयं [1]विष्णोर्जगत्कर्तृत्वे श्रुत्युपसर्जन-युक्तिविरोधनिरासकत्वेन तृतीया कक्ष्या ॥

सूत्रषट्कात्मके चतुर्थेऽसदधिकरणे श्रुतिसंवादियुक्तिविरोधपरिहारः ॥

'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति प्रथमसूत्रे 'असद्वा' इत्यादि श्रुतिसंवादियुक्त्या शून्यस्य जगत्कारणत्वमाशङ्क्य तत्र युक्त्यविरोधोक्तिः ॥

'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' इति द्वितीयसूत्रे शून्यस्य जगत्कारणत्वाङ्गीकारे प्रळये सर्वासत्त्वप्रसङ्गरूपबाधकोक्तिः ॥

'न तु दृष्टान्तभावात्' इति तृतीयसूत्रे तस्यानिष्टत्वप्रदर्शनार्थं तदङ्गीकारस्य प्रामाणिकपरित्यागरूपबाधकोक्तिः ॥

'स्वपक्षदोषाच्च' इति चतुर्थसूत्रे तस्यैवाप्रामाणिकस्वीकाररूपत्वोक्तिः ॥

'तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः' इति पञ्चमसूत्रे तृतीयचतुर्थाभ्यामुक्तस्य [2]साधनव......मत्वमाशङ्क्य तत्परिहारोक्तिः ॥

'एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः' इति षष्ठसूत्रे जीवादीनां जगत्कर्तृकत्वादिपक्षेषु तृतीयसूत्रोक्तसाधकाभावबाधकयोरतिदेशः ॥

'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' इति पञ्चमे भोक्त्रापत्त्यधिकरणे श्रुतिसिद्धयुक्तिविरोधपरिहारः ॥ इति तृतीया कक्ष्या ॥ ३ ॥

सूत्रसप्तकात्मकं षष्ठं तदनन्यत्वाधिकरणमेकं स्वातन्त्र्येण जगत्कर्तृत्वे बहुयुक्तिविरोधनिरासकत्वेन चतुर्थी कक्ष्या ॥

'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति प्रथमसूत्रे स्वतन्त्रकारणस्य ब्रह्मानन्यत्वं प्रतिज्ञाय तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः ॥

---

1. Reconstructed.
2. Here is break in text. *Two* reconstructions are possible in ths light of Contextual import

(a) साधकाभावबाधक सत्वाऽनुपपत्तिमत्वमाशङ्क्य ।
(b) साधनधर्मावच्छिन्नसाध्यव्यापकोपाधिमत्वमाशाङ्क्य ॥

'भावे चोपलब्धेः' इति द्वितीयसूत्रे स्वतन्त्रसाधनसद्भावाङ्गीकारे बाधकोक्तिः ॥

'सत्वाच्चावरस्य' इति तृतीयसूत्रे द्वितीयसूत्रोक्ततर्कस्येष्टापादनरूपत्व-परिहाराय 'अद्वयः सम्भूतः' इत्यादिश्रुतेः परतन्त्रसाधनपरत्वासम्भव इत्याशङ्का-परिहाराय 'नासदासीत्' इति विरोधमाशङ्क्य तस्याः सावकाशत्वोक्तिः ॥

'[1]युक्तेश्शब्दान्तराच्च' इति पञ्चमसूत्रे परतन्त्रसाधनानभ्युपगम एव महिमाधिक्यलाभात् 'नासदासीत्' इति श्रुतेः स्वरूपनिषेधपरत्वमेवास्त्विति शङ्कापरिहाराय साधनसद्भावाङ्गीकारे उक्तानुपपत्त्यभावस्य श्रुतिप्रमाणस्य चोक्तिः॥

'पटवच्च' इति षष्ठसूत्रे साधनान्तरेण सृष्टिविषये युक्तिरूपसाधकोक्तिः ॥

'यथा प्राणादिः' इति सप्तमसूत्रे पटादिदृष्टान्तेनैव महदादेः स्वतन्त्र-साधनजन्यत्वादिकमपि स्यादित्याशङ्कानिरासाय प्रकृत्यादेः परमात्मतन्त्रत्वे प्राणादिदृष्टान्तोक्तिः ॥ इति चतुर्थी कक्ष्या ॥ ४ ॥

सप्तमाधिकरणमारभ्य पादसमाप्त्यन्तमधिकरणपञ्चकं बहुयुक्तिविरोध-परिहारकत्वेन पञ्चमी कक्ष्या ॥

षट्सूत्रात्मके सप्तमे इतरव्यपदेशाधिकरणे कृत्स्नप्रसक्त्यादिबहुयुक्ति-विरोधपरिहारः ॥

'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' इति प्रथमसूत्रे जीवस्य-स्वतः कर्तृत्वे बाधकोक्तिः ॥

'अधिकं तु भेदनिर्देशात्' इति द्वितीयसूत्रे ईश्वरकर्तृत्वपक्षस्य तत्समानयोगक्षेमतापरिहाराय श्रमचिन्तादिदोषाभावे सामर्थ्यविशेषरूपहेतूक्तिः ॥

'अश्मादिवच्च तदनुपपत्तिः' इति तृतीयसूत्रे चेतनत्वाविशेषाज्जीव-स्यापीश्वरवदेव स्वतन्त्रकर्तृत्वं स्यादित्याशङ्कापरिहाराय जीवस्य स्वातन्त्र्यानुप-पत्त्युक्तिः ॥

'उपसंहारदर्शनान्नेति चेत् क्षीरवद्धि' इति चतुर्थसूत्रे जीवे स्वातन्त्र्येण कर्तृत्वस्यौत्रानुभवात् कथं तदनुपपत्तिरित्याशङ्क्य कर्तृत्वस्येश्वराधीनत्वेन स्वात-न्त्र्यांशेऽनुभवस्य भ्रमत्वोक्तिः ॥

---

1. अतः पूर्वतनस्य 'असद्व्यपदेशात्' इत्यादेः सूत्रस्यात्रार्थो नोपवर्णितः ।

'देवादिवदपि लोके' इति पञ्चमसूत्रे ईश्वरस्यैवानुपलम्भेनाभावात् कथं जीवकर्तृत्वस्य तदधीनत्वमित्याशङ्कापरिहाराय ईश्वरानुपलम्भस्य सदृष्टान्तमन्यथासिद्धत्वोक्तिः ॥

'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इति षष्ठसूत्रे ईश्वरसत्त्वेऽपि जीवकर्तृत्वस्य तदधीनत्वं कुत इत्याशङ्कायां तदधीनत्वानङ्गीकारे बाधकोक्तिः ॥

सूत्रपञ्चकात्मकेऽष्टमे विचित्रशक्त्यधिकरणेऽणीयस्त्वेन युक्तस्येशस्य महीयस्त्वादौ व्याघात इति व्याघातपर्यवसायिप्रबलयुक्त्यविरोधोक्तिः ॥

'श्रुतेस्तु शब्दमूलत्वात्' इति प्रथमसूत्रे कृत्स्नप्रसक्त्यादिदोषपरिहाराय लोकविरुद्धधर्माणां विष्णौ सहावस्थाने श्रुतिप्रमाणस्य युक्तिविरोधपरिहारोपयोगिशब्दैकसमधिगम्यत्वस्य चोक्तिः ॥

'आत्मनि चैवं विचित्राश्च हि' इति द्वितीयसूत्रे युक्तिविरोधपरिहारोपयोगिविचित्रशक्त्युक्तिः ॥

'स्वपक्षदोषाच्च' इति तृतीयसूत्रे जीवेश्वरभेद[1]प्रतिबन्दिपरिहारः ॥

'सर्वोपेता च तद्दर्शनात्' इति चतुर्थसूत्रे द्वितीयसूत्रोक्तशक्तेः सर्वविषयत्वे नित्यत्वे च प्रमाणोक्तिः ॥

'विकरणत्वान्नेति चेत्तदुक्तम्' इति पञ्चमसूत्रे प्रकारान्तरेण जगत्कर्तृत्वाक्षेपपरिहारः ॥

सूत्रद्वयात्मके नवमे न प्रयोजनाधिकरणे निष्फलत्वादियुक्तिविरोधपरिहारः॥

'न प्रयोजनवत्त्वात्' इति प्रथमसूत्रे ईशस्य जगत्कर्तृत्वे पूर्णत्वेन स्वप्रयोजनाभावोक्तिः ॥

'लोकवत्तु लीलाकैवल्यम्' इति द्वितीयसूत्रे फलाभावे कथमीशस्य प्रेक्षावतः सृष्टौ प्रवृत्तिरित्याशङ्कायां सदृष्टान्तं सुखोद्रेकात् स्वभावादेव जगत्सृष्टिरित्युक्तिः ॥

सूत्रत्रयात्मके (दशमे) वैषम्यनैर्घृण्याधिकरणे वैषम्यादियुक्तिविरोधपरिहारः ॥

---

1. Reconstructed.

'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इति प्रथमसूत्रे कर्मादिसापेक्षं कर्तृत्वमङ्गीकृत्य वैषम्यनैर्घृण्ययोः परिहारः ॥

'न कर्माविभागादिति चेन्नानादित्वात्' इति द्वितीयसूत्रेऽपेक्षणीयकर्मण ईशानधीनत्वे ईशस्य सर्वकारणत्वहानिः । ईशाधीनत्वे तु निर्निमित्तं विषमाणां कर्मणां कारयितुर्वैषम्यनैर्घृण्ये स्यातामित्याक्षेपे कर्मादीनामनादित्वाभ्युपगमेन समाधानम् ॥

'उपपद्यते चाप्युपलभ्यते च' इति तृतीयसूत्रे कर्मादिसापेक्षस्येशस्य स्वातन्त्र्यं न स्यादित्याशङ्कापरिहाराय उपपद्यत इत्युक्तिः । यद्येवं कर्मादिसत्ताया अपि ईशाधीनत्वे कर्माद्यपेक्षाप्यनपेक्षरूपैवेति पुनर्वैषम्याद्यापत्तिरित्याशङ्कायां 'उपलभ्यते च' इति चोक्तिः[1] ॥

'सर्वधर्मोपपत्तेश्च' इत्येकादशे सर्वधर्माधिकरणे ब्रह्मशब्दोक्तगुणपूर्णत्वे युक्तिविरोधनिरासः ॥ इति पञ्चमी कक्ष्या ॥ ५ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे द्वितीयाध्यायस्य प्रथमः युक्तिपादः समाप्तः ॥

## ॥ अथ समयपादो द्वितीयः ॥

'इतरेषां चानुपलब्धेः' इति सामान्यतो निराकरणं समयानां कृतम् । विशेषतो निराकरोत्यस्मिन् पादे इति भाष्योक्तेः प्रपञ्च्यप्रपञ्चकभावः पादसङ्गतिः । अत्र सूत्राणि पञ्चचत्वारिंशत् ॥ ४५ ॥ द्वादशाधिकरणानि ॥ १२ ॥ पञ्च कक्ष्याः । यद्यपि हैतुकपाषण्डमतनिरासकरणभेदेन तन्त्रदीपिकायां कक्ष्याद्वयमुक्तम् । तथाप्यवान्तरभेदमाश्रित्यायं विभागः ॥

प्रथमपञ्चाधिकरणे ईश्वरनिरपेक्षाचेतनप्रकृतिवादमतनिरासकत्वेन प्रथमा कक्ष्या ॥

तत्र सूत्रचतुष्टयात्मके प्रथमे रचनाधिकरणेऽचेतनप्रकृतिनिरीश्वरसाङ्ख्यमतनिरासः ॥

1. परिहारोक्तिः seems better reading

'रचनानुपपत्तेश्च नानुमानम्' इति प्रथमसूत्रे प्रधानस्य जगत्कर्तृत्वेऽचेतनत्वेन स्वतःप्रवृत्त्यनुपपत्तिरूपबाधकोक्तिः ॥

'प्रवृत्तेश्च' इति द्वितीयसूत्रे सिद्धान्तसाधकस्वतःप्रवृत्तिरूपयुक्तिविरोधोक्तिः ॥

'पयोऽम्बुवच्चेत्तत्रापि' इति तृतीयसूत्रे प्रथमसूत्रोक्ताचेतनत्वहेतोर्व्यभिचारनिरासः ॥

'व्यतिरेकानवस्थितेश्चानपेक्षत्वात्' इति चतुर्थसूत्रे पयोऽम्ब्वादौ व्यभिचाराभावेऽपि अयस्कान्तादौ व्यभिचारः स्यादिति शङ्कानिरासार्थं चेतनाचेतनसर्वप्रकृती[प्रवृत्ती]नामीश्वराधीनत्वोक्तिः ॥ अ ॥ १ ॥

'अन्यत्राभावाच्च न तृणादिवत्' इति द्वितीये अन्यत्राभावाधिकरणे ईश्वरानुगृहीताचेतनप्रकृतिकर्तृत्ववादिपातञ्जलमतनिरासः । अस्य मतस्य ईश्वराङ्गीकारेऽपि तस्य केवलमप्राधान्यादनीश्वरमतान्तर्भाव एव ॥ अ ॥ २ ॥

'अभ्युपगमेऽप्यर्थाभावात्' इति तृतीये अभ्युपगमाधिकरणे [1]देहकर्तृत्ववादिचार्वाकमतनिरासः ॥ अ ॥ ३ ॥

सूत्रद्वयात्मके चतुर्थे पुरुषाश्माधिकरणे पुरुषोपसर्जनप्रकृतिकर्तृत्वमतनिरासः ॥

'पुरुषाश्मवदिति चेत्तथापि' इति प्रथमसूत्रे पराभिप्रेतमनुमानमाशङ्क्य तत्र श्रुत्यवष्टम्भेन दृष्टान्तस्य साध्यविकलत्वोक्तिः ॥

'अङ्गित्वानुपपत्तेः' इति द्वितीयसूत्रे हैतुकमतीयानां श्रुतिविरोधागणनाद्युक्त्या साध्यविकलत्वोक्तिः ॥ अ ॥ ४ ॥

सूत्रद्वयात्मके पञ्चमे अन्यथानुमित्यधिकरणे प्रकृत्युपसर्जनपुरुषकर्तृत्वमतनिरासः ॥

'अन्यथानुमितौ च ज्ञशक्तिवियोगात्' इति प्रथमसूत्रे परोत्प्रेक्षितमनुमानमाशङ्क्य तस्याभासत्वाय दृष्टान्ते साध्यवैकल्योपपादनम् ॥

---

1. This School is typical of modern Behariorism or Naturalism.

'विप्रतिषेधाच्चासमञ्जसम्' इति द्वितीयसूत्रे सामान्यदोषेणापि प्राक्तनसर्वमतसहितैतन्मते[1] श्रुत्यादिविरोधेनाप्ययुक्तत्वकथनम् ॥ अ ॥ ५ ॥ क ॥ १ ॥

सप्तसूत्रात्मकं षष्ठं वैशेषिकाधिकरणमैकं हैतुककणादमतनिरासकमिति द्वितीया कक्ष्या ॥

'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इति प्रथमसूत्रे असमवायिकारण-वैचित्र्यनिरासः ॥

'उभयथापि न कर्मातस्तदभावः' इति द्वितीयसूत्रे 'तदभावः' इति तच्छब्देन पूर्वसूत्रस्थमहदादिशब्दोक्तपरिमाणसन्निधापितद्व्यणुकादिकार्यपरा-मर्शसौकर्याय निमित्तकारणनिरासः ॥

'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' इति तृतीयसूत्रे अवशिष्ट-समवायिकारणनिरासः ॥

'नित्यमेव च भावात्' इति चतुर्थसूत्रे पराभिमतप्रलयनिरासः ॥

'रूपादिमत्त्वाच्च विपर्ययो दर्शनात्' इति पञ्चमसूत्रे परमाणूनां पूर्वसूत्रोक्तनित्यत्वविपर्ययसाधनम् ॥

'उभयथा च दोषात्' षष्ठसूत्रे पूर्वोक्तानुमानस्य अप्रयोजकत्वसिद्ध-साधनत्वशङ्कापरिहारः ॥

'अपरिग्रहाच्चात्यन्तमनपेक्षा' इति सप्तमसूत्रे वैशेषिकमतस्याप्रामाणि-कत्वप्रमाणविरुद्धत्वयोरुक्तिः ॥ अ ॥ ६ ॥ क ॥ २ ॥

सप्तमाष्टमनवमैतदधिकरणत्रयं बौद्धमतनिरासकं इति तृतीया कक्ष्या ॥

सूत्राष्टकात्मके सप्तमे वैभाषिकाधिकरणे वैभाषिकसौत्रान्तिकयोः परमाणु-पुञ्जवादिनोर्मतनिरासः ॥

'समुदाय उभयहेतुकेऽपि तदप्राप्तिः' इति प्रथमसूत्रे घटादिव्यव-हारालम्बनत्वेन परपरिकल्पितपरमाणुसमुदायानुपपत्त्युक्तिः ॥

---

1. प्राक्तनसर्वमतसहचैतन्मते seems better.

'इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्' इति द्वितीयसूत्रे समुदायाद्यनुपपत्त्यभावमाशङ्क्य कारणस्य विसदृशकार्यजनकत्वमभ्युपेत्यापि तत्परिहारः ॥

'उत्तरोत्पादे च पूर्वनिरोधात्' इति तृतीयसूत्रे विसदृशकार्यजनकत्वस्याप्यसम्भवोक्तिः ॥

'[1]प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात्' इति पञ्चमसूत्रे पराभिमतनाशनिरासोक्तिः ॥

'उभयथा च दोषात्' इति षष्ठसूत्रे क्षणिकत्वे पराभिमतार्थापत्तिभङ्गः ॥

'आकाशे चाविशेषात्' इति सप्तमसूत्रे तत्रैव पराभिमतानुमानस्य सत्प्रतिपक्षत्वोक्त्या निरासः ॥

'अनुस्मृतेश्च' इत्यष्टमसूत्रे तस्यानुमानस्य प्रत्यभिज्ञाप्रत्यक्षबाधोक्तिः ॥ अ ॥ ७ ॥

सूत्रचतुष्टयात्मकेऽष्टमे माध्यमिकाधिकरणे [2]शून्यमतनिरासः ॥

'नासतो दृष्टत्वात्' इति प्रथमसूत्रे शून्यस्य जगत्कारणत्वे प्रमाणाभावरूपहेतुमभिप्रेत्य तत्साधकतया इतरप्रमाणमूलभूतप्रत्यक्षाभावोक्तिः ॥

'उदासीनानामपि चैवं सिद्धिः' इति द्वितीयसूत्रे शून्यस्य जगत्कारणत्वे पराभिमतानुमानस्य तर्कपराहत्युक्तिः ॥

'नाभाव उपलब्धेः' इति तृतीयसूत्रे मृद्घटादिवच्छून्यप्रपञ्चयोः कार्यकारणभावाङ्गीकारे स्याद्दृष्टिविरोधः । शून्यमेव जगदाकारेण भाति न परमार्थतो जगदस्तीत्यङ्गीकारे तु नोक्तदोष इत्याशङ्कापरिहाराय जगतोऽसत्त्वाङ्गीकारे सदिति प्रत्यक्षविरोधोक्तिः ॥

'वैधर्म्याच्च न स्वप्नादिवत्' इति चतुर्थसूत्रे प्रपञ्चसत्वग्राहिप्रत्यक्षस्य स्वप्नादिप्रतीतिवद्भ्रान्तित्वशङ्कानिरासाय तयोर्बाधकसदसद्भावरूपवैलक्षण्योक्तिः ॥ अ ॥ ८ ॥

---

1. इतःपूर्वतनस्य 'असति प्रतिज्ञोपरोधः' इत्यादेः सूत्रस्य व्याख्या नोपलभ्यते
2. Known as शून्याधिकरण

सूत्रत्रयात्मके नवमे [1]योगाचाराधिकरणे विज्ञानमतनिरासः ॥

'न भावोऽनुपलब्धेः' इति प्रथमसूत्रे 'ज्ञानात्मकं [2]जगत्' इत्यत्र प्रमाणाभावोक्तिः ॥

'क्षणिकत्वाच्च' इति द्वितीयसूत्रे तत्र विरुद्धधर्माधिकरणत्वरूपानुनुमानविरोधोक्तिः ॥

'सर्वथानुपपत्तेश्च' इति तृतीयसूत्रे पूर्वमतसहिते तन्मते प्रमाणाभावतद्विरोधयोरुक्तिः ॥ अ ॥ ९ ॥ क ॥ ३ ॥

सूत्रचतुष्टयात्मकं [3]क्षपणकाधिकरणमेकं दशमं तु जैनमतनिरासकमिति चतुर्थी कक्ष्या ॥

'नैकस्मिन्नसम्भवात्' इति प्रथमसूत्रे प्रपञ्चस्य सप्तप्रकारकत्वनिरासः ॥

'एवं चात्माकार्त्स्न्यम्' इति द्वितीयसूत्रे जीवस्य शरीरपरिमाणत्वेऽकार्त्स्न्यादिरूपानुपपत्त्युक्तिः ॥

'न च पर्यायादप्यविरोधो विकारादिभ्यः' इति तृतीयसूत्रे द्वितीयोक्तानुपपत्तेः समाधाने पुनरनुपपत्त्युक्तिः ॥

'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः' इति चतुर्थसूत्रे देहपरिमाणत्वाभावे जीवस्य परिमाणाभावप्रसङ्ग इत्याशङ्कापरिहाराय देहपरिमाणमन्तरेण स्वतःपरिमाणाङ्गीकारे बाधकोक्तिः ॥ अ ॥ १० ॥ क ॥ ४ ॥

एकादशद्वादशैतदधिकरणद्वयं वैदिकपाषण्डिनिरासकतया पञ्चमी कक्ष्या।

पञ्चसूत्र्यामेकादशे शैवाधिकरणे [4]शैवमतनिरासः ॥

'पत्युरसामञ्जस्यात्' इत्याद्यसूत्रे पशुपतेर्जगत्कर्तृत्वाभावे पारतन्त्र्यादिदोषवत्त्वहेतूक्तिः ॥

---

1. Known as अनुपलब्ध्यधिकरण
2. Subjectivism, Idealism, and Solipsism are refuted.
3. Known as नैकस्मिन्नधिकरण
4. Known as पाशुपताधिकरण—also as पत्युरधिकरण

'सम्बन्धानुपपत्तेश्च' इति द्वितीयसूत्रे तत्रैवाशरीरस्य कार्यकारण-सम्बन्धानुपपत्तिरूपान्तरङ्गहेतूक्तिः ॥

'अधिष्ठानानुपपत्तेश्च' इति तृतीयसूत्रे ततोऽपि बहिरङ्गाधिष्ठानानु-पपत्तिरूपहेत्वन्तरोक्तिः ॥

'करणवच्चेन्न भोगादिभ्यः' इति चतुर्थसूत्रे द्वितीयतृतीयसूत्रोक्त-हेत्वोरसिद्धिमाशङ्क्य तत्परिहारः ॥

'अन्तवत्त्वमसर्वज्ञता वा' इति पञ्चमसूत्रे द्वितीयसूत्रोक्तशरीरा-भावपक्षे दोषान्तरोक्तिः ॥ अ ॥ ११ ॥

सूत्रचतुष्टयात्मके शाक्ताधिकरणे [1]द्वादशे उपलक्षणतया निरस्तस्यापि शक्तिमतस्य विशेषदोषविवक्षया पुनर्निरासः ॥

'उत्पत्त्यसम्भवात्' इति प्रथमसूत्रे शक्तिकर्तृकमतायुक्तत्वे उत्पत्त्य-सम्भवरूपहेतूक्तिः ॥

'न च कर्तुः करणम्' इति द्वितीयसूत्रे मध्यमवाममतेन तत्परिहाराय अनुग्राहकपुरुषाङ्गीकारे कर्तृत्वोपयुक्तज्ञानादिकरणाभावोक्तिः ॥

'विज्ञानादिभावे वा तदप्रतिषेधः' इति तृतीयसूत्रे ज्ञानदेहादिकरण-वाननुग्राहकः शिव इत्यणुवाममतेन अनुग्राहकपुरुषस्य ज्ञानाद्यङ्गीकारे शक्तिकर्तृ-त्ववैयर्थ्यापत्त्या निराकृतपाशुपतमतप्रवेशोक्तिः ॥

'विप्रतिषेधाच्च' इति चतुर्थसूत्रे महावाममध्यवामाणुवामानां त्रयाणां मते श्रुत्यादिविरुद्धत्वरूपसाधारणदोषोक्तिः ॥ अ १२ ॥ क ॥ ५ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे द्वितीयाध्यायस्य द्वितीयः समयपादः समाप्तः ॥

## ॥ अथ श्रुतिपादस्तृतीयः ॥

'विप्रतिषेधात्' इत्युक्तदोषो वैदिकमतेऽपि स्यादित्याशङ्काव्युदासाय अत्र पादे श्रुतिविरोधो निरस्यत इति दृष्टान्तसङ्गतिः । उद्देशक्रमानुसारेण समयविरोधनिरासानन्तरं श्रुतिविरोधनिरासादवसरसङ्गतिरित्यनयोः संसृष्टिः ॥

---

1. Known as उत्पत्त्यधिकरण

" सजातीयविजातीयसङ्गतीनां समागमे ।
पृथक्तिलाक्षतन्यायात् संसृष्टिरिति कथ्यते ॥"

इति सङ्गतिप्रकाशे । अत्र सूत्राणि त्रिपञ्चाशत् ॥ ५३ ॥ एकोनविंशतिरधिकरणानि ॥ १९ ॥ पञ्च कक्ष्याः ॥ ५ ॥

तत्र प्राथमिकाधिकरणत्रयी उत्पत्तिश्रुत्योर्विरोधनिरासकत्वेन प्रथमा कक्ष्या॥ सप्तसूत्रात्मके प्रथमे वियदधिकरणे ब्रह्मोत्तरस्य नभस उत्पत्तिसिद्धान्तकथनम् ॥

'न वियदश्रुतेः' इति प्रथमसूत्रे वियत अनुत्पत्तौ प्रमाणोक्तिः ॥

'अस्ति तु' इति द्वितीयसूत्रे वियदुत्पत्तौ प्रमाणाभावे तदनुपलब्ध्यैव तदभावसिद्धेर्न पृथगनुत्पत्तौ प्रमाणं वक्तव्यमित्याशङ्कानिरासाय तदुत्पत्तौ प्रमाणोक्तिः ॥

'गौण्यसम्भवात्' इति तृतीयसूत्रे तस्यानुभवादिविरोधपरिहाराय उत्पत्तिश्रुतिबाहुल्यासम्भव इत्युक्त्यानुभवादीनां सावकाशत्वोक्तिः ॥

'शब्दाच्च' इति चतुर्थसूत्रे तेषामेव युक्त्युपोद्बलकव्यवस्थाप्रतिपादकश्रुत्या सावकाशत्वोक्तिः ॥

'स्याच्चैकस्य ब्रह्मशब्दवत्' इति पञ्चमसूत्रेऽनुत्पत्तिश्रुतेः सावकाशत्वे बाधकोद्धारः ॥

'प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः' इति षष्ठसूत्रे अनुत्पत्तिश्रुतेर्गौणानादित्वपरत्वेन सावकाशत्वानङ्गीकारे उत्पत्तिप्रतिपादकश्रुतिरूपबाधकोक्तिः ॥

'यावद्विकारं तु विभागो लोकवत्' इति सप्तमसूत्रे तत्रैव श्रुत्युपोद्बलकोत्पत्तिसाधकानुमानरूपबाधकान्तरोक्तिः ॥ अ ॥ १ ॥

'एतेन मातरिश्वा व्याख्यातः' इति द्वितीये मातरिश्वाधिकरणे वायोरुत्पत्त्यनुत्पत्तिश्रुत्योरविरोधोक्तिपूर्वकमुत्पत्तिसिद्धान्तः । वृत्तिज्ञानस्य [?] स्वरूपातिरिक्तस्य प्रवाहतोऽनादित्वोक्तिश्च[1] ॥ अ ॥ २ ॥

---

1. This type or pattern of प्रवाहतोऽनादित्व (beginninglessness) is defined by Vyāsarāja in his commentary on Madhva's उपाधिखण्डन known as मन्दारमञ्जरी. The definition is a logical masterpiece. It runs thus:—

एकप्रवाहमध्यपतिताऽनेकप्रवाहिप्रतियोगिकप्रागभावाऽवच्छिन्नकालाऽवृत्तित्वाऽनधिकरणध्वंसप्रतियोगिप्रवाहित्वम् ।

'असम्भवस्तु सतोऽनुपपत्तेः' इति तृतीयेऽसम्भवाधिकरणे ब्रह्मोत्पत्तिश्रुत्यविरोधपूर्वकं ब्रह्मणोऽनुत्पत्तिसिद्धान्तः ॥ अ ॥ ३ ॥ क ॥ १ ॥

चतुर्थपञ्चमेत्यधिकरणद्वयमुत्पत्तिमङ्गीकृत्य द्वारकारणविषयश्रुतिविरोधपरिहारात्मकत्वेन द्वितीया कक्ष्या ॥

'तेजोऽतस्तथा ह्याह' इति चतुर्थे तेजोऽधिकरणे तेजोजनकश्रुत्यविरोधः ॥ अ ॥ ४ ॥

'आपः' इति पञ्चमेऽब्धिकरणे अब्जनकश्रुत्यविरोधः ॥ अ ॥ ५ ॥ क ॥ २ ॥

'पृथिव्यधिकाररूपशब्दान्तरादिभ्यः' इति षष्ठं पृथिव्यधिकरणमेकं द्वारकारणमङ्गीकृत्योत्पाद्यविशेषविषयकश्रुतिविरोधपरिहारात्मकमिति तृतीया कक्ष्या॥ अ ॥ ६ ॥ क ॥ ३ ॥

सप्तमाष्टमनवमदशमैतदधिकरणचतुष्टयं संहारविषयश्रुतिविरोधपरिहारकत्वेन चतुर्थी कक्ष्या ॥

'तदभिध्यानादेव तु तल्लिङ्गात् सः' इति सप्तमे[1]ऽभिध्यानाधिकरणे संहर्तृविषयश्रुतिविरोधपरिहारः ॥ अ ॥ ७ ॥

'विपर्ययेण तु क्रमोऽत उपपद्यते च' इत्यष्टमे विपर्ययाधिकरणेऽधिभूताधिदैवसंहारक्रमविषयश्रुतिविरोधपरिहारः ॥ अ ॥ ८ ॥

सूत्रद्वयात्मके नवमे [2]लयक्रमाधिकरणे प्रागुक्तव्युत्क्रमे लयस्य विज्ञानादावसम्भवशङ्कानिरासाय संहारक्रमविषयश्रुत्यविरोधोक्तिः ॥

'अन्तरा विज्ञानमसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात्' इति प्रथमसूत्रे लिङ्गमात्रेण पूर्वपाक्षिते श्रुत्यादिरूपविशेषप्रमाणाभावोक्त्या सिद्धान्तः ॥

'चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः, तद्भावभावित्वात्' इति द्वितीयसूत्रे ताल्लिङ्गस्य सावकाशत्वोक्तिः ॥ अ ॥ ९ ॥

---

1. Known as तदभिध्यानाधिकरण
2. Known as अन्तराधिकरण—also as अन्तराविज्ञानाधिकरण

'नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः' इति ब्रह्मलयाधिकरणे[1] दशमे परब्रह्मणो लयतदभावश्रुत्योरविरोधोक्तिः ॥ अ ॥ १० ॥ क ॥ ४ ॥

एकादशाधिकरणमारभ्य नवाधिकरणानि जीवविषयश्रुतिविरोधनिरासकत्वेन पञ्चमी कक्ष्या ॥

सूत्रद्वयात्मके एकादशे ज्ञाधिकरणे जीवस्योत्पत्तिमत्त्वविषयकश्रुतिविरोधनिरासः ॥

'ज्ञोऽत एव' इति प्रथमसूत्रे जीवस्य परमात्मनः सकाशादुत्पत्तौ श्रुतिप्रमाणोक्तिः ॥

'युक्तेश्च' इति द्वितीयसूत्रे तद्बाधकत्वेनोक्ताया अनादित्वयुक्तेरप्रयोजकत्वोक्तिः ॥ अ ॥ ११ ॥

सप्तसूत्रात्मके द्वादशे उत्क्रान्त्यधिकरणे जीवाणुत्वविषयश्रुतिविरोधनिरासः॥

'उत्क्रान्तिगत्यागतीनाम्' इति प्रथमसूत्रे जीवाणुत्वरूपस्वपक्षसाधने हेतूक्तिः ॥

'स्वात्मना चोत्तरयोः' इति द्वितीयसूत्रे प्रसङ्गात् प्रथमोक्तोत्क्रान्त्यादीनां परमात्माधीनत्वप्रतिपादनम ॥

'नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्' इति तृतीयसूत्रेऽणुत्वे व्याप्तिश्रुतिबाधमाशङ्क्य तस्याः प्रकरणेनेश्वरपरत्वोक्तिः ॥

'स्वशब्दोन्मानाभ्यां च' इति चतुर्थसूत्रे व्याप्तिश्रुतेरीश्वरपरत्वे श्रुतिलिङ्गरूपप्रबलसाधकान्तरोक्तिः ॥

'अविरोधश्चन्दनवत्' इति पञ्चमसूत्रे तत्र तत्रापरिज्ञानरूपयुक्तेश्चन्दनदृष्टान्तेनान्यथासिध्युक्तिः ॥

'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि' इति षष्ठसूत्रे पञ्चमसूत्रोक्तदृष्टान्तदार्ष्टान्तिकयोर्वैषम्यशङ्कापरिहारः ॥

'गुणाद्वा लोकवत्' इति सप्तमसूत्रे मानुषादिसर्वजीवापेक्षया चिद्गुणव्याप्त्या प्रागुक्तयुक्तेरन्यथासिद्ध्युक्तिः ॥ अ ॥ १२ ॥

---

1. Known as नात्माधिकरण—also known as आत्माधिकरण

'व्यतिरेको गन्धवत्तथा च दर्शयति' इति व्यतिरेकाधिकरणे त्रयोदशे जीवस्यानेकदेहास्थितत्वविषयकश्रुतिविरोधनिरासः ॥ अ ॥ १३ ॥

सूत्रद्वयात्मके चतुर्दशे पृथगुपदेशाधिकरणे जीवस्येश्वराभिन्नत्वविषय-श्रुत्यविरोधः ॥

'पृथगुपदेशात्' इति प्रथमसूत्रे जीवस्येशभिन्नत्वे श्रुतिप्रमाणोक्तिः ॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति द्वितीयसूत्रे तु अद्वैत-श्रुत्यप्रामाण्यपरिहाराय तासां श्रुतीनां गतिकथनम् ॥ अ ॥ १४ ॥

'यावदात्मभावित्वाच्च न दोषः तद्दर्शनात्' इति पञ्चदशे यावदात्माधि-करणे जीवस्यानन्तत्वविषयकश्रुतिविरोधनिरासः ॥ अ १५ ॥

सूत्रद्वयात्मके पुंस्त्वाधिकरणे षोडशे जीवस्य ज्ञानानन्दादिरूपत्व-विषयश्रुत्यविरोधः ॥

'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति प्रथसूत्रे जीवस्यानन्द-रूपत्वे बाधकत्वेनोक्तयोः श्रुतियुक्त्योः सदृष्टान्तं गत्युक्त्या तद्रूपत्वसमर्थनम् ॥

'नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वान्यथा' इति द्वितीयसूत्रे प्रथमसूत्रोक्ताभिव्यक्त्यनङ्गीकारे बाधकोक्तिः ॥ अ ॥ १६ ॥

सूत्रदशकात्मके सप्तदशे कर्तृत्वाधिकरणे जीवस्य परतन्त्रकर्तृत्वविषय-श्रुतिविरोधनिरासः ॥

'कर्ता शास्त्रार्थवत्त्वात्' इति प्रथमसूत्रे जीवस्य कर्तृत्वे विधिनिषेध-रूपशास्त्रस्य सप्रयोजनत्वरूपहेतूक्तिः ॥

'विहारोपदेशात्' इति द्वितीयसूत्रे जीवस्य स्वतःकर्तृत्वाभावेऽपि परगतकर्तृत्वे विवेकाग्रहात्तादृशं कर्तारं प्रति शास्त्रं प्रवर्ततामित्याशङ्कायां पारमार्थिककर्तृत्वे विहारोपदेशरूपहेतूक्तिः ॥

'उपादानात्' इति तृतीयसूत्रे प्रामाणिकत्वान्मोक्षे जीवस्य स्वाभाविकं कर्तृत्वमस्तु संसारे तु काल्पनिकमेव किं न स्यादित्याशङ्कानिरासाय मोक्षार्थं साधनाद्युपादानप्रतीत्युक्तिः ॥

'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' इति चतुर्थसूत्रे जीवकर्तृत्वे श्रुतिप्रमाणोक्तिः ॥

'उपलब्धिवदनियमः' इति पञ्चमसूत्रे यद्येवं जीवस्यापि कर्तृत्वे कथमीश्वरस्यैव कर्तृत्वं पूर्वं समर्थितमित्याशङ्कायां करिष्यामीति निरूपिते कर्मणि [जीवस्य] नियमाभावादीश्वरस्य तु तद्भावात् स एव कर्ता न जीव इति प्रागुक्तम्। न तु सर्वथा जीवस्य कर्तृत्वाभाव इति सदृष्टान्तं समर्थनम् ॥

'शक्तिविपर्ययात्' इति षष्ठसूत्रे उभयोः कर्तृत्वाविशेषेऽपि ईश्वरस्यैव नियमेन कर्तृत्वं न जीवस्येत्येतत् किंनिबन्धनं वैलक्षण्यमित्याशङ्कायां स्वातन्त्र्यपारतन्त्र्यनिमित्तकमित्युक्तिः ॥

'समाध्यभावाच्च' इति सप्तमसूत्रे ईश्वरजीवयोः स्वातन्त्र्यास्वातन्त्र्ययोः समाधितदभावयोर्हेतुत्वोक्तिः ॥

'यथा च तक्षोभयथा' इत्यष्टमसूत्रे 'स्वतन्त्रः कर्ता' इत्युक्तेर्जीवस्याऽस्वतन्त्रत्वे कथं कर्तृत्वमित्याशङ्कायां सदृष्टान्तं कारयितृनियमितत्वकर्तृत्वयोरविरोधोक्तिः ॥

'परात्तु तच्छ्रुतेः' इति नवमसूत्रे तक्षवज्जीवस्य कर्तृत्वशक्तिर्न स्वाधीनेत्यर्थे श्रुतिप्रमाणोक्तिः ॥

'कृतप्रयत्नापेक्षस्तु विहितप्रतिषेधावैयर्थ्यादिभ्यः' इति दशमसूत्रे तर्हीशस्यैव स्यात् कर्तृत्वं न जीवस्येति पुनः शास्त्रवैयर्थ्यमित्याशङ्कायाम्, अनादिकर्मप्रयत्नयोग्यताङ्गीकारेण तत्परिहारः ॥ अ ॥ १७ ॥

सूत्राष्टकात्मकेऽष्टादशेऽशाधिकरणे जीवस्येश्वरांशत्वविषयश्रुतिविरोधनिरासः ॥

'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके' इति प्रथमसूत्रे जीवानामीशांशत्वं प्रतिज्ञाय 'नानाव्यपदेशात्' इत्यनेन अनेकविधभगवत्सम्बन्धित्वरूपांशत्वव्यपदेशरूपप्रमाणस्यावशिष्टसूत्रांशेन श्रुत्युपोद्बलकभेदाभेदव्यपदेशान्यथानुपपत्तिरूपप्रमाणस्य च कथनम् ॥

'मन्त्रवर्णात्' इति द्वितीयसूत्रे तदुक्त्युपोद्बलिकायाः सामान्येनांऽशत्वप्रतिपादिकायाः श्रुतेरुक्तिः ॥

'अपि स्मर्यते' इति तृतीयसूत्रे श्रुतिमूलकस्मृत्युक्तिः ॥

'प्रकाशादिवन्नैवं परः' इति चतुर्थसूत्रेऽशत्वेऽपि सदृष्टान्तं जीवाद्यसाम्यप्रतिज्ञा ॥

'स्मरन्ति च' इति पञ्चमसूत्रे दृष्टान्तमात्रस्याऽसाधकत्वात्तत्र स्मृतिप्रमाणोक्तिः ॥

'अनुज्ञा(ना)परिहारौ [1]देहसम्बन्धाज्ज्योतिरादिवत्' इति षष्ठसूत्रे सदृष्टान्तं तदुपोद्बलकयुक्तिकथनम् ॥

'असन्ततेश्चाव्यतिकरः' इति सप्तमसूत्रेऽपूर्णशक्तित्वस्य मत्स्याद्यसाम्यसाधकत्ववत् षष्ठोक्तदेहबन्धरूपसम्बन्धसाधकत्वस्यापि सम्भवात्तदुक्तिः ॥

'आभास एव च' इत्यष्टमसूत्रे प्रतिबिम्बत्वस्य मत्स्याद्यसाम्य इव सप्तमोक्तापूर्णशक्तित्वेऽपि प्रयोजकत्वसम्भवात्तदुक्तिः ॥ अ ॥ १८ ॥

सूत्रत्रयात्मके एकोनविंशेऽदृष्टाधिकरणे जीवस्येशप्रतिबिम्बत्वविषयकश्रुतिविरोधनिरासः ॥

'अदृष्टानियमात्' इति प्रथमसूत्रे प्रतिबिम्बानां मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथासिद्ध्युक्तिः ॥

'अभिसन्ध्यादिष्वपि चैवम्' इति द्वितीयसूत्रेऽदृष्टवज्जीवगततयाऽन्तरङ्गरागादिदोषवैचित्र्यस्य प्रतिबिम्बवैचित्र्यकारणत्वासम्भवोक्तिः ॥

'प्रदेशादिति चेन्नान्तर्भावात्' इति तृतीयसूत्रे बहिरङ्गस्वर्गादिस्थानवैचित्र्यस्य कारणत्वाभावोक्तिः ॥ अ ॥ १९ ॥ क ॥ ५ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे द्वितीयाध्यायस्य तृतीयः श्रुतिपादः समाप्तः ॥

---

1. अनुज्ञानापरिहारौ is the reading in Madhva Vilas Book Depot (Kumbakonam) Edition.

## ॥ अथ न्यायोपेतश्रुतिपादश्चतुर्थः ॥

अत्र सूत्राणि त्रयोविंशतिः ॥ २३ ॥ त्रयोदशाधिकरणानि ॥ १३ ॥ पञ्च कक्ष्याः ॥ ५ ॥

प्राथमिकमधिकरणपञ्चकं प्राणरूपैकार्थप्रतिपादकत्वेन प्रथमा कक्ष्या। सूत्रत्रयात्मके प्रथमे प्राणजन्यधिकरणे [1]सर्वेन्द्रियाणामुत्पत्तिसमर्थनम् ॥

'तथा प्राणाः' इति प्रथमसूत्रे वियदादेः परमात्मोत्पन्नत्वे उक्तयुक्त्यतिदेशेन इन्द्रियाणां परमात्मोत्पन्नत्वोक्तिः ॥

'गौण्यसम्भवात्' इति द्वितीयसूत्रे तद्बाधकत्वेन शङ्किताया अनादित्वश्रुतेः सहेतुकममुख्यार्थकत्वोक्तिः ॥

'प्रतिज्ञानुपरोधाच्च' इति तृतीयसूत्रे उत्पत्तिप्रमाणोपोद्बलिकायाः 'स इदं सर्वम्' इति श्रुतेरुक्तिः ॥ अ ॥ १ ॥

'तत्प्राक्श्रुतेश्च' इति द्वितीये तत्प्रागधिकरणे मनसो जन्यत्वसमर्थनम् ॥ अ ॥ २ ॥

'तत्पूर्वकत्वाद्वाचः' इति तृतीये तत्पूर्वकत्वाधिकरणे वाच उत्पत्तिसमर्थनम् ॥ अ ॥ ३ ॥

सूत्रद्वयात्मके चतुर्थे सप्तगत्यधिकरणे प्राणसङ्ख्याविचारः ॥

'सप्त गतेर्विशेषितत्वात् च' इति [2]प्रथमसूत्रे 'सप्त प्राणाः' इति श्रुतेः सावकाशत्वप्रदर्शनपूर्वकं प्राणानां द्वादशत्वे प्रमाणोक्तिः ॥

'हस्तादयस्तु स्थितेऽतो नैवम्' इति द्वितीयसूत्रे 'सप्त प्राणाः' इति श्रुतौ प्राणानामसहपाठेनाभावशङ्काव्यावृत्त्यर्थं सहापाठे निमित्तोक्तिः॥ अ ॥ ४ ॥

'अणवश्च' इति पञ्चमेऽण्वधिकरणे प्राणपरिणामविषयश्रुतिविरोधापरिहारः ॥ अ ॥ ५ ॥ क ॥ १ ॥

---

1. Known as प्राणोत्पत्त्यधिकरण
2. Twelve *breaths* are spoken of. Of course modern physiology and medicine do *NOT* have such a count, or theory.

षष्ठसप्तमाष्टमनवमैतदधिकरणचतुष्टयं मुख्यप्राणरूपैकार्थप्रतिपादकत्वेन द्वितीया कक्ष्या ॥

सूत्रद्वयात्मके षष्ठे श्रेष्ठाधिकरणे मुख्यप्राणजन्मविषयश्रुतिविरोधपरिहारः ॥

'श्रेष्ठश्च' इति प्रथमसूत्रे मुख्यप्राणस्य विष्णुजातत्वोक्तिः ॥

'न वायुक्रिये पृथगुपदेशात्' इति द्वितीयसूत्रे तत्र प्रमाणत्वेनाभिमतायाम् 'आत्मत एष प्राणो जायते' इति श्रुतौ प्राणपदस्य मुख्यप्राणपरत्वसिद्ध्यर्थं सहेतुकं बाह्यवायुचेष्टापरत्वाभावोक्तिः ॥ अ ॥ ६ ॥

सूत्रद्वयात्मके सप्तमे चक्षुराद्यधिकरणे मुख्यप्राणस्य स्वातन्त्र्यनिरासः ॥

'चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः' इति प्रथमसूत्रे मुख्यप्राणस्य चक्षुरादिवदेव परमात्माधीनत्वोक्तिः ॥

'अकरणत्वाच्च न दोषः तथा हि दर्शयति' इति द्वितीयसूत्रे चक्षुरादिसाम्यव्यवच्छेदाय मुख्यप्राणस्य जीवाकरणत्वोक्तिः ॥ अ ॥ ७ ॥

'पञ्चवृत्तिर्मनोवद्व्यपदिश्यते' इत्यष्टमे पञ्चवृत्त्यधिकरणे मुख्यप्राणस्य प्राणादिपञ्चदासवत्वस्य पञ्चरूपत्वस्य चोक्तिः ॥ अ ॥ ८ ॥

'अणुश्च' इति नवमे प्राणपरिणामाधिकरणे मुख्यप्राणपरिमाणविषयश्रुतिविरोधपरिहारः ॥ अ ॥ ९ ॥ क ॥ २ ॥

सूत्रत्रयात्मकं करणज्योतिरधिकरणमेकं[1] चक्षुरादेर्जीवेशकरणत्वश्रुतिविरोधनिरासकर्त्रीति तृतीया कक्ष्या ॥

'ज्योतिराद्यधिष्ठानं तु तदामननात्' इति प्रथमसूत्रे प्राणानां ब्रह्मकरणत्वप्रतिज्ञापूर्वकं तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः ॥

'प्राणवता शब्दात्' इति द्वितीयसूत्रे जीवकरणत्वश्रुतेरीश्वरक्लृप्तजीवानुसारित्वार्थकत्वेन सावकाशत्वोक्तिः ॥

'तस्य च नित्यत्वात्' इति तृतीयसूत्रे "जीवस्य करणान्याहुः" इति श्रौतव्यवहारस्यौपचारिकत्वमभिप्रेत्य प्राणवत्पदप्रकृतजीवप्राणतत्सम्बन्धानां नित्यत्वोक्तिरूपोपचारबीजोक्तिः ॥ अ ॥ १० ॥ क ॥ ३ ॥

---

1. Known as ज्योतिराद्यधिकरण

सूत्रत्रयात्मकमेकादशमिन्द्रियाधिकरणमेकं [1]मुख्यप्राणस्येन्द्रियानिन्द्रियत्वविषयश्रुतिविरोधनिरासकत्वेन चतुर्थी कक्ष्या ॥

'त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्' इति प्रथमसूत्रे मुख्यप्राणव्यतिरिक्तप्राणानामिन्द्रियत्वप्रतिज्ञापूर्वकं तत्र श्रुतिप्रमाणोक्तिः ॥

'भेदश्रुतेः' इति द्वितीयसूत्रे मुख्यप्राणपरित्यागेन तदितरद्वादशप्राणानामिन्द्रियत्वाङ्गीकारे चक्षुरादीतरप्राणप्रतिबन्धिपरिहारार्थं चक्षुरादिभ्यो मुख्यप्राणस्य श्रुतप्रमाणेन सर्वकर्तृकारयितृत्वेनेशसाम्यरूपविशेषोक्तिः ॥

'वैलक्षण्याच्च' इति तृतीयसूत्रे मुख्यप्राणस्येशसाम्ये तस्येशाधीनत्वेऽनिन्द्रियत्वासम्भवः, ईशाधीनत्वे प्रागुक्तविरोध इति शङ्कापरिहाराय मुख्यप्राणस्य प्राणवृत्तेः केवलेश्वराधीनत्वे श्रुतिप्रमाणोक्तिः ॥

अ ॥ ११ ॥ क ॥ ४ ॥

द्वादशत्रयोदशैतदधिकरणद्वयं शरीररूपैकार्थप्रतिपादकमिति पञ्चमी कक्ष्या॥

'संज्ञामूर्तिकॢप्तिस्तु त्रिवृत्कुर्वत उपदेशात्' इति द्वादशे संज्ञाधिकरणे शरीरकर्तृविचारः ॥ अ ॥ १२ ॥

सूत्रद्वयात्मके त्रयोदशे मांसाधिकरणे शरीरोपादानविचारः ॥

'मांसादि भौमं यथाशब्दमितरयोश्च' इति प्रथमसूत्रे देहस्य श्रुतिप्रमाणकभूतत्रयात्मकत्वोक्तिः ॥

'वैशेष्यात्तु तद्वादस्तद्वादः' इति द्वितीयसूत्रे बाधकपरिहारः ॥

अ ॥ १३ ॥ क ॥ ५ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे द्वितीयाध्यायस्य चतुर्थः न्यायोपेतश्रुतिपादः समाप्तः समाप्तश्च द्वितीयोऽध्यायः ॥

1. Known as त इन्द्रियाधिकरण

## ॥ अथ तृतीयोऽध्यायः ॥

विरक्तानां विरक्तानां विबुधानां प्रमोदिनी ।
सूत्रामृतार्थलहरी वर्धतां लब्धसाधना ॥

समन्वयाविरोधाभ्यां वस्तुनिर्धारणानन्तरं फलाध्यायप्रतिपाद्यमोक्षसाधनीभूतवैराग्यादिविचारस्यात्र प्रकृतत्वादवसरभेदः ॥

'व्यापारन्यायतो मध्ये प्राप्तिश्चावसरो मतः' इति सङ्गतिप्रकाशे । अत एव साधनाध्याय इति व्यपदेशः ॥

तृतीये साधनाध्याये सूत्राण्यभ्रग्रहेन्दवः ॥ १९० ॥

अत्राधिकरणान्यग्निग्रहाः (९३) कक्ष्याः शरेषवः ॥ ५५ ॥

वैराग्यभक्त्युपासनाज्ञानानामुत्तरोत्तरं प्रति पूर्वपूर्वस्य कारणत्वेन क्रमाच्चतुर्षु पादेषु निरूपणात् प्रथमो वैराग्यपादः, द्वितीयो भक्तिपादः, तृतीय उपासनापादः, चतुर्थो ज्ञानपाद इति च व्यपदिश्यते ॥

तत्र प्रथमे पादे वैराग्यस्य कृत्यसाध्यत्वेन तत्साधनज्ञानविषयदुःखहेतुगत्यागतिस्वर्गनरकादिस्वरूपं निरूप्यते । अत्र पादे सूत्राण्येकोनत्रिंशत् ॥ २९ ॥

विंशतिरधिकरणानि ॥ २० ॥ सप्त कक्ष्याः ॥ ७ ॥

तत्र प्राथमिकी षडधिकरणी, भूतानां जीवेन सह वियोगाभावप्रतिपादिकेति प्रथमा कक्ष्या ॥

'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' इति प्रथमे तदन्तराधिकरणे मरणे जीवस्य सामान्यतो भूतावियोगसमर्थने प्रश्नव्याख्यानरूपप्रमाणोक्तिः ॥ १ ॥

'त्र्यात्मकत्वात्तु भूयस्त्वात्' इति द्वितीये त्र्यात्मकाधिकरणे सर्वभूतगमने आर्थिककल्पना ॥ २ ॥

'प्राणगतेश्च' इति तृतीये प्राणगत्यधिकरणे आर्थिककल्पनायां तन्मूलभूतप्राणगतिरूपहेतोरनुमानरूपविशेषप्रमाणोक्तिः ॥ ३ ॥

'अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात्' इति चतुर्थे अग्न्यादिगत्यधिकरणे [1]तस्यानुमानस्य स्वरूपासिद्धिशङ्कापरिहारः ॥ ४ ॥

'प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः' इति पञ्चमे श्रवणाधिकरणे [2]भूतसाहित्यस्यार्थिकत्वकल्पनायां कल्पकाभावमाशङ्क्य तत्परिहारः ॥५॥

'अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः' इति षष्ठे अश्रुतत्वाधिकरणे सर्वभूतगमने प्रत्यक्षश्रवणाभावमाशङ्क्य विशेषश्रुत्युक्तिः ॥ ६ ॥ क ॥ १ ॥

सप्तमाष्टमाधिकरणद्वयं वैराग्यादेरावश्यकत्वप्रतिपादकमिति द्वितीया कक्ष्या॥

'भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति' इति सप्तमे भाक्ताधिकरणे मोक्षस्य कर्मसाध्यत्वान्न ज्ञानसाधनं वैराग्यमित्याक्षेपस्य परिहारः ॥ ७ ॥

'कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम्' इत्यष्टमे कर्मशेषाधिकरणे[3] भोगेनैव कर्मक्षयसम्भवेन तन्मूलकसंसारनाशस्य स्वयं सिद्धत्वात् किं वैराग्येणेत्याक्षेपस्य परिहारः ॥ ८ ॥ क ॥ २ ॥

नवमदशमैकादशैतदधिकरणत्रयं पुनरावृत्तिविषयत्वात्तृतीया कक्ष्या ॥

'यथेतमनेवं च' इति गतागताधिकरणे [4]मार्गस्य स्मरणविषयत्वेन गमनप्रकारेणागमनमपीति प्राप्ते क्वचिद्गतिप्रकारेण क्वचिदन्यथा चेति समर्थनम् ॥ ९ ॥

त्रिसूत्र्यां दशमे चरणाधिकरणे पुनरावृत्तेश्चरणफलत्वशङ्कापरिहारपूर्वकं (यज्ञादि) [5]करणफलत्वसमर्थनम् ॥

'चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः' इत्यादिमसूत्रे 'रमणीयचरणा' इत्यादिश्रुत्या गमनागमनस्य चरणफलत्वमाशङ्क्य चरणशब्दस्य कार्ष्णाजिनिमते कर्मोपलक्षकत्वोक्तिः ॥

'आनर्थक्यमिति चेन्न तदपेक्षत्वात्' इति द्वितीयसूत्रे चरणशब्दस्य लक्षणायां बाधकपरिहारः ॥

---

1. Also Known as अग्न्यधिकरण or अग्न्याद्यधिकरण.
2. Another name—प्रथमे श्रवणाधिकरण
3. A different name—कृतात्ययाधिकरण
4. Also known as यथेताधिकरण
5. Reconstructed

'सुकृतदुष्कृते एवेति तु बादरिः' इति तृतीयसूत्रे श्रुत्युक्तचरणशब्दस्य स्वमतेन बादरिमतेन [1]च कर्मणि मुख्यवृत्तित्वप्रतिपादनम् ॥ १० ॥

त्रिसूत्र्यामेकादशेऽनिष्टाधिकरणे अनिष्टादिकारिणामपि पुनरावृत्तिसमर्थनम् ॥

'अनिष्टादिकारिणामपि च श्रुतम्' इति प्रथमसूत्रे पापादिकारिणामपि विप्रतिपन्नगतागतादिदुःखमात्रे श्रुतिप्रमाणोक्तिः ॥

'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्' इति द्वितीयसूत्रेऽनिष्टादिकारिणां नित्यनरकस्यापि सत्वेन गतागतादिदुःखं कैमुत्यसिद्धमित्यभिप्रेत्य न केवलमेतद्गतागतदुःखं किंत्वधिकमप्यस्तीत्यर्थस्य सप्रमाणकोक्तिः ॥

'स्मरन्ति च' इति तृतीयसूत्रे पूर्वोक्ताखिलार्थप्रतिपादकतदुपात्तश्रुतिव्याख्यानरूपायाः, 'गच्छन्ति पापिनः सर्वे निरयं [2]नात्र संशयः' इत्यादिस्मृतेः प्रदर्शनम् ॥ ११ ॥ क ॥ ३ ॥

द्वादशत्रयो[3]दशैतदधिकरणद्वयी नरकविषयत्वाच्चतुर्थी कक्ष्या ॥

'अपि सप्त' इति द्वादशे नरकाधिकरणे [4]नरकाणां नित्यानित्यविभागकथनम् ॥ १२ ॥ क ॥ ४ ॥

'विद्याकर्मणोरिति तु प्रकृतत्वात्' चतुर्दशं [5]विद्याकर्माधिकरणमेकं जीवानां गतिस्वातन्त्र्यनिरासप्रतिपादकमिति पञ्चमी कक्ष्या ॥ १४ ॥ क ॥ ५ ॥

पञ्चसूत्रीपञ्चदशमन्धंतमोऽधिकरणमेकम् [6]अन्धे तमसि दुःखमात्रसमर्थनात् षष्ठी कक्ष्या ॥

'न तृतीये तथोपलब्धेः' इति प्रथमसूत्रे तमसि सुखाभावे श्रुतिप्रमाणोक्तिः ॥

---

1. बादरि is different from बादरायण
2. नरकं is the reading in Madhva Vilas Book Depot (Kumbakonam) Edition
3. 13th Adhikarana is Missing
4. Also known as अपिसप्ताधिकरण
5. A different name विद्याधिकरण
6. Another name—न तृतीयाधिकरण

'स्मर्यतेऽपि च लोके' इति द्वितीयसूत्रे स्मृत्यनुमानरूपप्रमाणद्वयोक्तिः ॥

'दर्शनाच्च' इति तृतीयसूत्रे विरिञ्चिप्रत्यक्षप्रमाणोक्तिः ॥

'तृतीये शब्दावरोधः संशोकजस्य' इति चतुर्थसूत्रे अर्थापत्तिप्रमाणोक्तिः ॥

'स्मरणाच्च' इति पञ्चमसूत्रे तमसः स्वरूपकथने मोहप्राप्तिरित्यर्थे स्मृतिप्रमाणोक्तिः ॥ १५ ॥ क ॥ ६ ॥

षोडशाधिकरणमारभ्य पञ्चाधिकरणी तु जीवागमनरूपैकविषयप्रतिपादिकेति सप्तमी कक्ष्या ॥

'तत्स्वाभाव्यापत्तिरुपपत्तेः' इति षोडशे तत्स्वाभाव्यापत्त्यधिकरणे कर्मिणां धूमादिपदप्राप्तिनिरासाय धूमादिगतौ गतिरित्यादितत्स्वाभाव्यापत्तिकथनम् ॥ १६ ॥

'नातिचिरेण विशेषात्' इति सप्तदशे गर्भवासाधिकरणे [1]कर्मिणः स्वर्गादवाग्गतस्याचिरेण गर्भवाससमर्थनम् ॥ १७ ॥

सूत्रद्वयात्मकेऽष्टादशे व्रीह्याद्यधिकरणे [2]स्वर्गादवाग्गतस्य व्रीह्यादिभावनिरासार्थमन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशोक्तिः ॥

'अन्याधिष्ठिते पूर्ववदभिलापात्' इति प्रथमसूत्रे व्रीह्यादिच्छेदादिना तद्गतजीवस्य दुःखादिभोगाभावात् कर्मिणो व्रीह्यादिप्रवेश एव न तद्भाव इत्यर्थे श्रुतिप्रमाणोक्तिः ॥

'अशुद्धमिति चेन्न शब्दात्' इति द्वितीयसूत्रे हिंसारूपत्वेऽपि न यज्ञादेर्दुःखसाधनत्वमित्यर्थे प्रमाणोक्तिः ॥ १८ ॥

'रेतःसिग्योगोऽथ' इत्येकोनविंशे रेतोऽधिकरणे कर्मिणः पितृप्रवेशासमर्थनम् ॥ १९ ॥

---

1. Described also as नातिचिराधिकरण
2. Named also as—अन्याधिकरण

'योनेः शरीरम्' इति विंशे योन्याधिकरणे कर्मिणो मातृयोनि-प्रवेशानन्तरं प्रागसिद्धशरीरसमर्थनम् ॥ २० ॥ ७ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे तृतीयाध्यायस्य प्रथमः वैराग्यपादः समाप्तः ॥

## ॥ अथ भक्तिपादो द्वितीयः ॥

प्रथमपादे भक्तिदार्ढ्यार्थं वैराग्यस्य निरूपितत्वेन तृतीयपादे वक्ष्यमाणो-पासनां प्रति भक्तेरङ्गत्वेन च भक्तेरवसरप्राप्तत्वेनास्य पादस्य पूर्वपादेनाव-सरसङ्गतिः ॥

भक्तेर्माहात्म्यज्ञानपूर्वकस्नेहरूपत्वेन कृत्स्नविषयत्वान्माहात्म्यज्ञानस्य स्नेह-हेतुत्वेन च भगवन्महिमोच्यते । यद्यपि प्रथमे समन्वयाध्याय एव सर्वशब्द-समन्वयाङ्गतया सर्वमहिमोक्तः । तथाप्यत्र तमेव क्वचिद्विवेचयति क्वचित्समर्थ-यतीति न पुनरुक्तिः । तथा हि तत्र तत्र वक्ष्यामः । अत्र पादे सूत्राणि द्विचत्वारिंशत् ॥ ४२ ॥ अधिकरणानि विंशतिः ॥ २० ॥ दश कक्ष्याः ॥ १० ॥

तत्रावस्थाधिकरणी अवस्थानां भगवदधीनत्वरूपैकविषयप्रतिपादना-त्प्रथमा कक्ष्या । अत्रैव जन्मादिसूत्रोक्तसृष्ट्यादिकर्तृत्वस्य विविच्य कथनम् ।

चतुस्सूत्र्यां प्रथमे स्वप्नाधिकरणे [1]स्वप्नावस्थाया भगवदधीनत्वसमर्थनम् । अत्रैव स्वाप्नपदार्थानां सृष्टिसंहारकर्तृत्वोक्तिः ॥

'सन्ध्ये सृष्टिराह हि' इति प्रथमसूत्रे स्वाप्नार्थानां सत्यत्वसिद्ध्यर्थं सृष्टिनिरोधयोरुक्तिः ॥

'निर्मातारं चैके पुत्रादयश्च' इति द्वितीयसूत्रे स्वाप्नपदार्थसृष्टिनि-रोधकर्तृत्वप्रतिपादनम् ॥

'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति तृतीयसूत्रे सृष्टिहेतुभूतोपादानाद्युक्तिः ॥

---

1. Also known as सन्ध्याधिकरण

'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' इति चतुर्थसूत्रे स्वाप्नोऽर्थः सत्य उत्पत्तिविनाशवत्त्वाद्घटादिवदिति प्रथमसूत्रोक्तानुमानस्य स्वाप्नार्थोऽसत्यो बाह्यार्थाजन्यत्वादिति सत्प्रतिपक्षानुमाने बाधाप्रयोजकत्वयोरुक्तिः ॥ १ ॥

'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' इति द्वितीये स्वप्नतिरोधानाधिकरणे [1]स्वाप्नतिरोधानस्य भगवदधीनत्वसमर्थनम् । ज्ञानाज्ञानबन्धमोक्षहेतुत्वस्य विवेचनं च ॥ २ ॥

'देहयोगाद्वा सोऽपि' इति तृतीये जागराधिकरणे [2]जागरावस्थाया भगवदधीनत्वोक्तिः । जाग्रदवस्थानियमनकर्तृत्वोक्तिश्च ॥ ३ ॥

'तदभावो नाडीषु तच्छ्रुतेरात्मनि ह' इति चतुर्थे सुषुप्त्यधिकरणे[3] सुप्त्यवस्थायां जीवप्राप्यत्वस्येशे समर्थनम् । सुप्त्यवस्थानियमनकर्तृत्वं च ॥ ४ ॥

'अतः प्रबोधोऽस्मात्' इति पञ्चमे सुप्तिप्रबोधाधिकरणे [4]सुप्तिप्रबोधस्य भगवदधीनत्वसमर्थनम् । सुप्तिप्रबोधनियमनकर्तृत्वं च ॥ ५ ॥

'स एव च कर्मानुस्मृतिशब्दविधिभ्यः' इति षष्ठे सर्वावस्थाप्रेरकत्वाधिकरणे [5]सर्वजनसर्वावस्थाप्रेरकत्वस्येशे समर्थनम् ॥ ६ ॥

'मुग्धेऽर्धसम्पत्तिः परिशेषात्' इति सप्तमे मोहाधिकरणे [6]मोहावस्थायामीशस्य जीवप्राप्यत्वसमर्थनम् । मोहावस्थानियामकत्वं च ॥ ७ ॥ क ॥ १ ॥

त्रिसूत्र्यामष्टमे ईशरूपाभेदाधिकरणे [7]सर्वेषामीशरूपाणामभेदसमर्थनमिति तदेकं द्वितीया कक्ष्या । अत्रानन्दमयाधिकरणोक्तेशरूपाभेदसमर्थनम् ॥

'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति प्रथमसूत्रे परमेश्वररूपाणामभेदोक्तिः ॥

1. Described as पराभिध्यानाधिकरण
2. Mentioned also as देहयोगाधिकरण
3. Also known as तदभावाधिकरण
4. Another name—प्रबोधाधिकरण
5. Named also as कर्मानुस्मृत्यधिकरण
6. Also known as मुग्धाधिकरण
7. Described as न स्थानतोऽधिकरण—also as उभयलिङ्गाधिकरण

'न भेदादिति चेन्न प्रत्येकमतद्वचनात्' इति द्वितीयसूत्रे ईशरूपाणामभेदे बाधकपरिहारः ॥

'अपि चैवमेके' इति तृतीयसूत्रे ईशरूपाणामभेदे विशेषप्रमाणोक्तिः ॥ ८ ॥ क ॥ २ ॥

चतुस्सूत्री नवममरूपत्वाधिकरणमेकं [1]प्राकृतदेहराहित्यमीशे समर्थयतीति तृतीया कक्ष्या 'अन्यथाभावव्यावृत्तेश्च' इत्यत्रोक्ताप्राकृतशरीरभावसमर्थनं च ॥

'अरूपवदेव हि तत्प्रधानत्वात्' इति प्रथमसूत्रे ईशस्य रूपरहितत्वोपपादनम् ॥

'प्रकाशवच्चावैयर्थ्यम्' इति द्वितीयसूत्रे तस्यारूपित्वे रूपवत्त्वश्रुतिविरोधमाशङ्क्य विलक्षणरूपाङ्गीकारेणारूपश्रुत्यप्रामाण्यपरिहारः ॥

'आह च तन्मात्रम्' इति तृतीयसूत्रे ईशतद्रूपयोरभेदाभिप्रायेण तस्य ज्ञानानन्दमात्रत्वे प्रमाणोक्तिः ॥

'दर्शयति चाथो अपि स्मर्यते' इति चतुर्थसूत्रे पूर्वोक्तश्रुतेरीशस्वरूपमात्रविषयकत्वेनान्यथासिद्धिशङ्कायां विशेषप्रमाणोक्तिः ॥ ९ ॥ क ॥ ३ ॥

'अत एव चोपमा सूर्यकादिवत्' इति दशमं जीवेशभेदाधिकरणमेकम्[2] ईश्वरजीवाभेदनिरासकमिति चतुर्थी कक्ष्या । जिज्ञासासूत्रोक्तजीवब्रह्माभेदनिरासस्य विवेचनम् ॥ १० ॥ क ॥ ४ ॥

एकादशद्वादशैतदधिकरणे भक्तिरूपैकविषयके इति पञ्चमी कक्ष्या ॥

'अम्बुवदग्रहणात्तु न तथात्वम्' इत्येकादशेऽम्बुवदधिकरणे भक्तेर्मुक्तावानन्दाभिव्यक्तिफलकत्वकथनम् ॥ ११ ॥

द्वादशे सूत्रद्वयात्मके भक्तितारतम्याधिकरणे [3]भक्तेस्तारतम्यकथनम् । जिज्ञासासूत्रीय 'अथातः' शब्दोक्तस्य भक्तेर्मोक्षसाधनत्वस्य समर्थनं च ॥

---

1. Also known as अरूपवदधिकरण
2. Named also as अत एवाधिकरण and सूर्यकादिवदधिकरण
3. Described as वृद्धिह्रासाधिकरण

'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति प्रथमसूत्रे ब्रह्मादीनां मुक्तिरूपफलं तारतम्यवत्तत्साधनभक्तितारतम्यादिति प्रतिज्ञाहेतुव्याप्तीनां कथनम् ॥

'दर्शनाच्च' इति द्वितीयसूत्रे पक्षधर्मतोक्तिः ॥ १२ ॥ क ॥ ५ ॥

'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इति त्रयोदशे प्रकृतैतावत्त्वाधिकरणे जन्मादिसूत्रोक्तविश्वपातृत्वमीश्वरस्य समर्थ्यत इति तदेकं षष्ठी कक्ष्या ॥ १३ ॥ क ॥ ६ ॥

पञ्चसूत्री चतुर्दशमव्यक्ताधिकरणमेकं [1]भगवदपरोक्षस्य जीवीयशक्त्य-साध्यत्वसमर्थकमिति सप्तमी कक्ष्या । 'अदृश्यत्वाद्य'धिकरणोक्ताव्यक्तत्व-समर्थनं च ॥

'तदव्यक्तमाह हि' इति प्रथमसूत्रे भगवदपरोक्षस्य जीवीयशक्त्य-साध्यत्वसाधकेशाव्यक्तत्ववचने श्रुत्युक्तिः ॥

'अपि संराधने प्रत्यक्षानुमानाभ्याम्' इति द्वितीयसूत्रे [2]भक्तिहीना-राधनेऽप्यव्यक्तत्वे ज्ञानिप्रत्यक्षसूक्ष्मत्वहेतुकानुमानप्रमाणोक्तिरिति लौकिकप्रति-बन्दिनिवारणम् ॥

'प्रकाशवच्चावैशेष्यम्' इति तृतीयसूत्रे ब्रह्मणः स्थूलसूक्ष्मत्वरूपेण व्यक्ताव्यक्तत्वाभावे वैशेष्याभावरूपहेतूक्त्या वैदिकाग्न्यादिप्रतिबन्दिनिवारणम् ॥

'प्रकाशश्च कर्मण्यभ्यासात्' इति चतुर्थसूत्रे ब्रह्मणोऽव्यक्तत्वे भक्त्यादिसाधनवैयर्थ्यशङ्कापरिहाराय श्रवणाद्यभ्यासेन दृश्यत्वोक्तिः ॥

'अतोऽनन्तेन तथा हि लिङ्गम्' इति पञ्चमसूत्रे त्वव्यक्तत्वदृश्यत्वयो-र्विरोधाशङ्कापरिहारायानन्तशक्तित्वाद्युक्तिः ॥ १४ ॥ क ॥ ७ ॥

पञ्चदशषोडशसप्तदशैतदधिकरणत्रयम् आनन्दादिरूपैकविषयत्वेनाष्टमी कक्ष्या ॥

---

1. This Adhikarana has been severely critcised by Appayya Dikshita in his मध्वतन्त्रमुखमर्दन. The critcism has been answered in Vijayindra Tirtha's मध्वाध्वकण्टकोद्धार

2. Reference is to the Possibility of *Man* ever coming face to face with *God*,

चतुस्सूत्र्यां पञ्चदशे उभयव्यपदेशाधिकरणे [1]गुणस्वरूपस्येशस्य गुणित्वसमर्थनम् ॥

'उभयव्यपदेशात्त्वहिकुण्डलवत्' इत्याद्यसूत्रे स्थूलमतीनां बुद्ध्यारोहार्थं गुणगुणिनोरभेदे प्रसिद्धाहिकुण्डलदृष्टान्तोक्तिः ॥

'प्रकाशाश्रयवद्वा तेजस्त्वात्' इति द्वितीयसूत्रे बाह्यप्रत्यक्षसिद्धादित्यमण्डलदृष्टान्तोक्तिः ॥

'पूर्ववद्वा' इति तृतीयसूत्रे साक्षिप्रत्यक्षसिद्धकालदृष्टान्तोक्तिः ॥

'प्रतिषेधाच्च' इति चतुर्थसूत्रे गुणगुणिनोरभेदमभ्युपेत्य गुणित्व समर्थनस्य वैयर्थ्यशङ्कायां भेदप्रतिषेधोक्तिः ॥ १५ ॥

त्रिसूत्र्यां षोडशे लौकिकगुणवैलक्षण्याधिकरणे [2]ईशगुणानामलौकिकत्वसमर्थनम् ॥

'परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः' इति प्रथमसूत्रे परमात्मगुणानां लोकविलक्षणत्वमिति प्रतिज्ञातार्थे सेतुत्वादिसाक्षाद्धेतुचतुष्टयोक्तिः ॥

'दर्शनात्' इति द्वितीयसूत्रे दृष्टत्वादिहेतवोऽर्थात् प्रदर्शिताः ॥

'बुद्ध्यर्थः पादवत्' इति तृतीयसूत्रेऽलौकिकेऽप्यानन्दादिपदप्रयोगसमर्थनम् ॥ १६ ॥

सूत्रद्वयात्मके सप्तदशे स्थानविशेषाधिकरणे ईशानन्दादिप्रतिबिम्बत्वेऽपि ब्रह्माद्यानन्दादेर्वैचित्र्यसमर्थनम् ॥

'स्थानविशेषात् प्रकाशादिवत्' इति प्रथमसूत्रे आनन्दादिवैचित्र्ये स्थानसामर्थ्योक्तिः ॥

'उपपत्तेश्च' इति द्वितीयसूत्रे प्रतिबिम्बभूतब्रह्मानन्दादिवैचित्र्ये बिम्बसामर्थ्योक्तिः । तन्त्रदीपिकायां तु ब्रह्मानन्दादीनामीशानन्दादिप्रतिबिम्बत्वमुच्यत इत्युक्तम् ॥ १७ क ॥ ८ ॥

---

1. Also known as आहिकुण्डलाधिकरण
2. Another name—परमतोऽधिकरण

'तथान्यत् प्रतिषेधात्' इति तथान्यदधिकरणमष्टादशमेकमीशस्य प्रकारान्तरेण पूर्वोक्ताव्यक्तत्वसमर्थनमिति नवमी कक्ष्या ॥ १८ ॥ क ॥ ९ ॥

एकोनविंशं विंशं चेत्यधिकरणद्वयं विष्णोः सर्वजन्माद्यष्टकर्तृत्वप्रतिपादकमिति दशमी कक्ष्या ॥

'अनेन सर्वगतत्वमायामयशब्दादिभ्यः' इत्येकोनविंशे मायामयशब्दाधिकरणे [1]सार्वकालिकसार्वदैशिकसृष्टयाद्यष्टकर्तृत्वसमर्थनम् ॥ १९ ॥

चतुस्सूत्र्यां विंशे कर्मफलाधिकरणे सृष्टयाद्यष्टकमध्यपतितस्वर्गादिफलदातृत्वसमर्थनम् ॥

'फलमत उपपत्तेः' इति प्रथमसूत्रे ईश्वरस्य फलदातृत्वे उपपत्तिरूपप्रमाणोक्तिः ॥

'श्रुतत्वाच्च' इति द्वितीयसूत्रे ईश्वरस्य फलदातृत्वे उपोद्बलकप्रबलविशेषश्रुतिप्रमाणोक्तिः ॥

'धर्मं जैमिनिरत एव' इति तृतीयसूत्रे एष ह्येव साधु कर्म कारयति' इत्यादिश्रुत्या ईशस्य कर्मकारयितृत्व एव चारितार्थ्यात् फलदातृत्वं कर्मण एवेत्याक्षेपः ॥

'पूर्वं तु बादरायणो हेतुव्यपदेशात्' इति चतुर्थसूत्रे प्राधान्याप्राधान्याभ्यां ब्रह्मकर्मणोरुभयोरपि फलदातृत्वसाधनम् । 'तन्त्रदीपिकायां तु' फलमत इत्युक्त्वा कर्मणः फलहेतुत्वं नेति प्राप्तचोद्यनिरासाय तृतीयसूत्रम् । तस्य ब्रह्मवत् प्राधन्यनिरासायान्त्यमित्युक्तम् ॥ २० ॥ क ॥ १० ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे तृतीयाध्यायस्य द्वितीयः भक्तिपादः समाप्तः ॥

---

1. A different name—अनेनसर्वगतत्वाधिकरण

## ॥ अथोपासनापादस्तृतीयः ॥

द्वितीयपादे उपासनाङ्गभक्तेर्निरूपितत्वेन, चतुर्थपादे भक्तिसाध्योपासनासाध्यज्ञानस्य निरूप्यमाणत्वादुपासनस्यावसरप्राप्ततया अस्य पूर्वपादेनावसरसङ्गतिः ॥

अत्र सूत्राण्यष्टषष्टिसङ्ख्याकानि ॥ ६८ ॥ द्विचत्वारिंशदधिकरणानि ॥ ४२ ॥ त्रिंशत्कक्ष्याः ॥ ३० ॥

तत्र पञ्चसूत्रात्मकमाद्यं सर्वत्रेदान्ताधिकरणमेकं ध्यानरूपोपासनाङ्गतया शास्त्राभ्यासरूपोपासनाप्रतिपादकमिति प्रथमा कक्ष्या ॥

'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति प्रथमसूत्रे ब्रह्मणः सर्वपरिज्ञेयत्वं प्रतिज्ञाय तत्रोपासनविधिविषयत्वरूपहेतुकथनम् ॥

'भेदान्नेति चेदेकस्यामपि' इति द्वितीयसूत्रे सर्वपरिज्ञानस्य वस्तुभेदरूपबाधकमाशङ्क्य प्रतिबन्द्या तद्वारणम् ॥

'स्वाध्यायस्य ताथात्वेन हि समाचारे अधिकाराच्च' इति तृतीयसूत्रे शाखाभेदरूपबाधकस्याशक्तिनिबन्धनतया अन्यथासिद्धिसूचनपूर्वकं प्रकृतसाध्ये हेत्वन्तरकथनम् ॥

'सलिलवच्च तन्नियमः' इति चतुर्थसूत्रे ब्रह्मणः सर्वशाखाज्ञेयत्वे साधिते मन्दानां ध्यानानधिकारः स्यादित्याशङ्कापरिहारः सलिलदृष्टान्तेन कथितः ॥

'दर्शयति च' इति पञ्चमसूत्रे निर्बाधयुक्तिसिद्धार्थे श्रुतिस्मृतिप्रमाणोक्तिः ॥ १ ॥ क ॥ १ ॥

द्वितीयतृतीयचतुर्थैतदधिकरणत्रयं सार्वत्रिकगुणोपसंहारप्रतिपादकमिति द्वितीया कक्ष्या ॥

चतुस्सूत्र्यां द्वितीये सर्वोपसंहाराधिकरणे [1]सर्वगुणोपसंहारानुपसंहारयोः समर्थनम् ॥

'उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च' इति प्रथमसूत्रे उपसंहारस्य कर्तव्यत्वे विहितत्वरूपहेतूक्तिः ॥

---

1. Also known as उपसंहाराधिकरण

'अन्यथात्वं च शब्दादिति चेन्नाविशेषात्' इति द्वितीयसूत्रे 'आत्मेत्येवोपासीत' इति श्रुत्या प्रकरणसाम्येन सर्वगुणोपसंहारस्य कर्तव्यत्वाभावमाशङ्क्य तत्र विशेषप्रमाणाभावोक्त्या निरासः ॥

'न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्' इति तृतीयसूत्रे सर्वगुणोपसंहारस्य सर्वैरशक्यत्वादकर्तव्यत्वमित्याशङ्कापरिहारार्थं सप्रमाणकं प्रकरणभेदादनुपसंहाराभ्युपगमः ॥

'संज्ञातश्चेत्तदुक्तमस्ति तु तदपि' इति चतुर्थसूत्रे तृतीयसूत्रोक्तमनुपसंहारमाक्षिप्य उपसंहारस्याभ्युपगमेन तत्परिहारः ॥ २ ॥

'प्राप्तश्च समञ्जसम्' इति तृतीये योग्यताधिकरणे[1] प्रागुक्तोपसंहारानुपसंहारयोः पुरुषभेदेन कर्तव्यत्वसमर्थनम् ॥ ३ ॥

'सर्वाभेदादन्यत्रेमे' इति चतुर्थे सर्वाभेदाधिकरणे बहुगुणोपसंहारस्य फलाधिक्योक्त्या कर्तव्यत्वसमर्थनम् ॥ ४ ॥ क ॥ २ ॥

'आनन्दादयः प्रधानस्य' इति पञ्चमं चतुर्गुणाधिकरणमेकं[2] सर्वमुमुक्षुसाधारणगुणोपासनानिर्णायकमिति तृतीया कक्ष्या ॥ ५ ॥ क ॥ ३ ॥

'प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे' इति षष्ठं प्रियशिरस्त्वाधिकरणमेकं प्रियशिरस्त्वादिगुणानां सर्वोपास्यत्वाभावप्रतिपादकमिति चतुर्थी कक्ष्या ॥ ६ ॥ क ४ ॥

'इतरे त्वर्थसामान्यात्' इति सप्तमं मध्यमगुणोपासनाधिकरणमेकं[3] देवानां बहुगुणोपासनसाधकमिति पञ्चमी कक्ष्या ॥ ७ ॥ ५ ॥

सूत्रद्वयात्मकमष्टममाध्यानाधिकरणमेकं प्रागुक्तगुणोपसंहारानुपसंहारयोः प्रमाणोपपादकमिति षष्ठी कक्ष्या ॥

'आध्यानाय प्रयोजनाभावात्' इति प्रथमसूत्रे सर्वगुणोपसंहारस्य चतुर्मुखाधिकारिकत्वेनादावुक्तिः ॥

---

1. Described as प्राप्त्यधिकरण
2. Also known as आनन्दाद्यधिकरण
3. Another name—इतराधिकरण

'आत्मशब्दाच्च' इति द्वितीयसूत्रे चतुर्मुखेतराधिकारिकसर्वगुणानुपसंहारे प्रमाणोक्तिः ॥ ८ ॥ क ॥ ६ ॥

'आत्मगृहीतिरितरवदुत्तरात्' इति नवममात्मगृहीत्यधिकरणं प्रागुक्तचतुर्गुणोपासनसाधकमिति सप्तमी कक्ष्या ॥ ९ ॥ क ॥ ७ ॥

'अन्वयादिति चेत् स्यादवधारणात्' इति दशममन्वयाधिकरणमेकं सर्वगुणानुपसंहारे प्रमाणत्वमात्मशब्दस्याक्षिप्य समादधदित्यष्टमी कक्ष्या ॥ १० ॥ क ॥ ८ ॥

'कार्याख्यानादपूर्वम्' इत्येकादशं कार्याख्यानाधिकरणमेकमलौकिकगुणोपसंहारसमर्थकमिति नवमी कक्ष्या ॥ ११ ॥ क ॥ ९ ॥

सूत्रद्वयात्मकं द्वादशं समानाधिकरणमेकं परमात्मदर्शने साधनोपासनस्य स्वानुरूपफलदत्वसमर्थकमिति दशमी कक्ष्या ॥

'समान एवं चाभेदात्' इति प्रथमसूत्रे ब्रह्माण्याः क्रियासङ्कोचेन सरस्वतीब्रह्मणोः सामान्यविशेषोपासने तदनुसारिफले चेत्युक्तिः ॥

'सम्बन्धादेवमन्यत्रापि' इति द्वितीयसूत्रे त्रिविक्रमत्वादिक्रियाणामनित्यत्वेन चतुर्मुखस्यापि क्रियाविशेषोपासनासम्भवात् कथं ब्रह्माणीविरिञ्चयोः समविषमोपासनमित्याक्षेपे क्रियाणामीशतादात्म्येन नित्यत्वाद्विरिञ्चस्य तदुपासनमिति तत्परिहारः ॥ १२ ॥ क ॥ १० ॥

सूत्रद्वयात्मकं त्रयोदशमात्मशब्दार्थव्यवस्थाधिकरणमेक[1]मात्मशब्दोक्तगुणोपसंहारस्य सर्वकर्तव्यत्वं समर्थयतीत्येकादशी कक्ष्या ॥

'न वा विशेषात्' इति प्रथमसूत्रे आत्मशब्दस्य व्यवस्थया गुणाभिध्यायकत्वे युक्त्यभिधानम् ॥

'दर्शयति च' इति द्वितीयसूत्रे तदुपोद्बलकश्रुतिप्रमाणोक्तिः ॥ १३ ॥ क ॥ ११ ॥

'सम्भृतिद्युव्याप्त्यपि चातः' इति चतुर्दशं सम्भृत्यधिकरणमेकं सम्भृत्यादिगुणानां सर्वोपास्यत्वनिवारकमिति द्वादशी कक्ष्या ॥ १४ ॥ क ॥ १२ ॥

---

1. Described as नवाविशेषाधिकरण

'पुरुषविद्यायामपि चेतरेषामनाम्नानात्' इति पञ्चदशं पुरुष विद्याधिकरणमेकं सर्वविद्यातो गुणोपसंहारस्य कर्तव्यत्वं समर्थयतीति त्रयोदशी कक्ष्या ॥ १५ ॥ क ॥ १३ ॥

'वेधाद्यर्थभेदात्' इति षोडशं वेधाद्यधिकरणमेकं भेदनादीशगुणोपासनस्य यत्याद्यनधिकारिकत्वं समर्थयतीति चतुर्दशी कक्ष्या ॥ १६ ॥ १४ ॥

सप्तदशमष्टादशं चेत्यधिकरणद्वयं मुक्तिविषयत्वेन पञ्चदशी कक्ष्या। सूत्रद्वयात्मके सप्तदशे मुक्तोपासनाधिकरणे [1]मुक्तावुपासनानुवृत्तिसमर्थनम् ॥

'हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्' इति प्रथमसूत्रे मुक्तोपासनस्य स्वेच्छामात्रनिबन्धनत्वप्रतिपादनम् ॥

'साम्पराये तर्तव्याभावात्तथा ह्यन्ये' इति द्वितीयसूत्रे शाखान्तरेण तदेव समर्थितम् ॥ १७ ॥

सूत्रत्रयात्मकेऽष्टादशे मुक्तकर्माधिकरणे [2]मुक्तानां कर्मणि नियमाभावसमर्थनम् ॥

'छन्दत उभयाविरोधात्' इति प्रथमसूत्रे मुक्तानां कर्मकरणानियमे विधिप्रत्यवायाभावरूपहेतुकथनम् ॥

'गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः' इति द्वितीयसूत्रे हेतोरसिद्धिशङ्कापरिहारः ॥

'उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्' इति तृतीयसूत्रे निश्चायकप्रमाणोक्तिः ॥ १८ ॥ क ॥ १५ ॥

'अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम्' इत्येकोनविंशमनियमाधिकरणमेकं ब्रह्मदर्शिनां मध्ये केषांचिन्मुक्तिः केषांचिन्नेति नियमो नास्तीति समर्थनात् षोडशी कक्ष्या ॥ १९ ॥ १६ ॥

सूत्रद्वयात्मकं विंशं यावदधिकाराधिकरणमेकमुपासनायामधिकारनियमसाधकमिति सप्तदशी कक्ष्या ॥

---

1. Also known as हान्यधिकरण
2. Another name छन्दाधिकरण

'यावदधिकारमवस्थितिराधिकारिकाणाम्' इत्यादिमसूत्रेऽधिकार-नियमे तारतम्योक्तिः ॥

'अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्' इति द्वितीयसूत्रे तारतम्यरूपहेतोरासिद्धिशङ्कायां बाधकोद्धारेण तत्परिहारः ॥ २० ॥ १७ ॥

एकविंशं, द्वाविंशं, त्रयोविंशं चेत्यधिकरणत्रयं मुख्यप्राणविषयकत्वा-दष्टादशी कक्ष्या ॥

सूत्रत्रयात्मकैकविंशेऽधिकारितारतम्याधिकरणे [1]उपासकानां प्राणाव-धित्वसमर्थनम् ॥

'इयदामननात्' इति प्रथमसूत्रेऽधिकारिणः प्राणावसानत्वे श्रुति-प्रमाणोक्तिः ॥

'अन्तरा भूतग्रामवदिति चेत्तदुक्तम्' इति द्वितीयसूत्रे प्राणादप्युत्तमा-धिकारिसत्त्वेऽनुमानमाशङ्क्य तत्परिहाराय श्रुतिप्रमाणोक्तिः ॥

'अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत्' इति तृतीयसूत्रे 'प्राणो वाव सर्वेभ्यो भूयान्' इति श्रुतौ सर्वशब्दस्य विवक्षितसङ्कुचितार्थप्रति-पादनम ॥ २१ ॥

'व्यतिहारो विशिंषन्ति हीतरवत्' इति द्वाविंशे व्यतिहाराधिकरणे प्राणादीशस्योत्तमत्वसमर्थनम् ॥ २२ ॥

'सैव हि सत्यादयः' इति त्रयोविंशे हरिसर्वोत्तमत्वाधिकरणे [2]प्राणादी-शस्येवान्येषामप्युत्तमत्वं स्यादित्याशङ्कायां नान्येषामिति समर्थितम् ॥ २३ ॥ क ॥ १८ ॥

सूत्रत्रयात्मकं चतुर्विंशं श्रीतत्वाधिकरणमेकं[3] लक्ष्म्या ईशोपासनाया-मनधिकारं समर्थयतीत्येकोनविंशतिः कक्ष्या ॥

---

1. Described as इयदामननाधिकरण
2. Noted as सत्याधिकरण
3. Noted as कामादधिकरण

‘कामादितरत्र तत्र चायतनादिभ्यः’ इति प्रथमसूत्रे श्रिय उपासनाधिकारित्वे हेतुभूतसंसारित्वसाधकस्य जन्मादेरसत्त्वोक्तिः ॥

‘आदरादलोपः’ इति द्वितीयसूत्रे श्रियोऽसंसारित्वे कथमुपासनमित्याक्षेपपरिहारायोपासनाऽलोपस्यादरनिमित्तकत्वोक्तिः ॥

‘उपस्थितेस्तद्वचनात्’ इति तृतीयसूत्रे उपासनलोपाभावनिमित्तादरे कारणीभूतस्य नित्यमुक्तत्वस्यास्वतन्त्रायां लक्ष्म्यामसम्भवात् कथमुपासनाऽलोप इत्याक्षेपपरिहाराय भगवदुपस्थितिरूपकारणोक्तिः ॥ २४ ॥ क ॥ १९ ॥

‘तन्निर्धारणार्थनियमः तद्दृष्टेःपृथग्घ्यप्रतिबन्धः फलम्’ इति पञ्चविंशं निर्धारणाधिकरणमेकं श्रवणमननादिसर्वोपासनानां कर्तव्यत्वं साधयतीति विंशतितमा कक्ष्या ॥ २५ ॥ क ॥ २० ॥

षड्विंशं सप्तविंशमष्टाविंशमित्यधिकरणत्रयं गुरुविषयकत्वेनैकविंशतितमा कक्ष्या ॥

‘प्रदानवदेव हि तदुक्तम्’ इति षड्विंशतितमे गुरुप्रदानाधिकरणे उपासनायां प्रीतिपूर्वकगुरूपदेशाङ्गकथनम् ॥ २६ ॥

‘लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि’ इति सप्तविंशतितमे गुरुप्रसादप्राबल्याधिकरणे [1]गुरुप्रसादस्य बलीयस्त्वसमर्थनम् ॥ २७ ॥

सूत्रद्वयात्मकेऽष्टाविंशतितमे पूर्वविकल्पाधिकरणे पूर्वप्राप्तादन्यस्य गुरोः स्वीकार्यत्वसमर्थनम् ॥

‘पूर्वविकल्पः प्रकरणात् स्यात् क्रिया मानसवत्’ इति प्रथमसूत्रे पश्चात्तनगुरुस्वीकारे प्रकरणादित्यन्तरङ्गहेतूक्तिः ॥

‘अतिदेशाच्च’ इति द्वितीयसूत्रे पूर्वगुरुणा समोत्तमगुरुस्वीकारेऽतिदिश्यमानत्वरूपबहिरङ्गहेतूक्तिः ॥ २८ ॥ २१ ॥

एकोनत्रिंशत्रिंशाधिकरणे उपासनाजन्यापरोक्षसाधनत्वप्रतिपादके इति द्वाविंशतितमा कक्ष्या ॥

---

1. Noted as लिङ्गभूयस्त्वाधिकरण

सूत्रद्वयात्मके एकोनत्रिंशे विद्याधिकरणे ज्ञानस्यैव मुक्तिहेतुत्व-समर्थनम् ॥

'विद्यैव तु निर्धारणात्' इति प्रथमसूत्रे ज्ञानस्य मुक्तिहेतुत्वे 'नान्यः पन्थाः' इत्यादिश्रुतौ निर्धारणरूपहेतूक्तिः ॥

'दर्शनाच्च' इति द्वितीयसूत्रे 'तमेवं विद्वान्' इति श्रौतविद्याशब्दस्या-परोक्षज्ञानपरत्वसमर्थनम् ॥ २९ ॥

'श्रुत्यादिबलीयस्त्वाच्च न बाधः' इति त्रिंशे श्रुत्यादिबलीयस्त्वा-धिकरणे ज्ञानस्यैव मोक्षहेतुत्वे 'कर्मणैव हि संसिद्धिम्' इत्यादिप्रमाणान्तरबाधस्य परिहारः ॥ ३० ॥ क ॥ २२ ॥

'अनुबन्धादिभ्यश्च' इत्येकत्रिंशमनुबन्धाधिकरणमेकं ब्रह्मदर्शनस्य भक्तिसाध्यत्वं साधयतीति त्रयोविंशतिः कक्ष्या ॥ ३१ ॥ क ॥ २३ ॥

द्वात्रिंशं त्रयस्त्रिंशं चेत्यधिकरणद्वयमपरोक्षज्ञानविषयमिति चतुर्विंशतिः कक्ष्या ॥

'प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम्' इति द्वात्रिंशे प्रज्ञान्तराधिकरणे ब्रह्मज्ञाने तारतम्योक्तिः ॥ ३२ ॥

'न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः' इति त्रयस्त्रिंशे बिम्बापरोक्षाधिकरणे [1]मुक्तिहेतुत्वे ब्रह्मज्ञानस्य बिम्बविषयकत्वसमर्थनम् ॥ ३३ ॥ क ॥ २४ ॥

'परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः' इति चतुस्त्रिंशं भक्तिस्वातन्त्र्यनिषेधाधिकरणमेकं [2]भक्तेः स्वातन्त्र्येण ब्रह्मदर्शनादिहेतुत्वनिरास-कमिति पञ्चविंशतिः कक्ष्या ॥ ३४ ॥ क ॥ २५ ॥

सूत्रद्वयात्मकं पञ्चत्रिंशमंशाधिकरणमेकं ब्रह्मदर्शनसाधनोपासनस्याना-दियोग्यतासापेक्षत्वेन योग्यतानादित्वायांशांशिनोरैक्यं समर्थयतीति षड्विंशतिः कक्ष्या ॥

---

1. Noted as नसामान्याधिकरण
2. Also known as परेणाधिकरण

'एक आत्मनः शरीरे भावात्' इति प्रथमसूत्रे अंशांशिनोरेकत्वेऽशस्यांशिकर्मनिर्मितशरीरस्थितिरूपहेतूक्तिः ॥

'व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्' इति द्वितीयसूत्रे सुखज्ञानादिभेदादंशांशिनोर्भेद इत्याक्षेपेऽल्पज्ञानादावनुसन्धानाभावेऽपि प्रधानसाधनोपासनादिफलानुसन्धानात्तत्परिहारः ॥ ३५ ॥ क । २६ ॥

सूत्रद्वयात्मकं षट्त्रिंशमङ्गदेवतोपासनाधिकरणमेकं ब्रह्मादिदेवतोपासानस्याधिकारिभिः कर्तव्यत्वं समर्थयतीति सप्तविंशतिः कक्ष्या ॥

'अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्' इति प्रथमसूत्रे ब्रह्मोपासनस्य चतुर्मुखाद्यङ्गदेवतोपासनसाहित्येन कर्तव्यत्वमुत्तमदेवतागुणानामधमेषूपसंहाराभावश्च समर्थ्यते ॥

'मन्त्रादिवद्वाऽविरोधः' इति द्वितीयसूत्रे अधमगुणानामुत्तमेषूपसंहारकथनम् ॥ ३६ ॥ क ॥ २७ ॥

सप्तत्रिंशाष्टात्रिंशाधिकरणद्वयं भूमगुणोपासनाविषयत्वेनाष्टाविंशतिः कक्ष्या॥

'भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति' इति सप्तत्रिंशे भूमोपासनाधिकरणे [1]भूमगुणोपासनस्य सर्वासाधारणत्वसमर्थनम् ॥ ३७ ॥

'नाना शब्दादिभेदात्' इत्यष्टत्रिंशे भूमगुणतारतम्याधिकरणे [2]भूमगुणोपासने तारतम्यसमर्थनम् ॥ ३८ ॥ क ॥ २८ ॥

एकोनचत्वारिंशं चत्वारिंशं चेत्यधिकरणद्वयं अविम्बोपासनाविषयकमिति एकोनत्रिंशत्कक्ष्या ॥

'विकल्पो विशिष्टफलत्वात्' इत्येकोनचत्वारिंशे बिम्बेतररूपोपासनाधिकरणे [3]बिम्बातिरिक्तभगवदुपासनस्यावश्यकत्वेनाकर्तव्यत्वनिरासः ॥३९॥

'काम्यास्तु यथाकामं समुच्चीयेरन् न वा पूर्वहेत्वभावात्' इति चत्वारिंशे काम्योपासनाधिकरणे बिम्बान्यभगवदुपासनस्यानावश्यकस्य विकल्पेन कर्तव्यत्वसमर्थनम् ॥ ४० ॥ क ॥२९ ॥

---

1. Also known as भूमज्यायस्त्वाधिकरण
2. Noted as नानाशब्दाधिकरण
3. Another name विकल्पाधिकरण

एकचत्वारिंशदधिकरणं द्विचत्वारिंशदधिकरणमिति अधिकरणद्वयमङ्ग-देवतोपासनविषयत्वेन त्रिंशत्कक्ष्या ॥

चतुस्सूत्र्यामेकचत्वारिंशेऽङ्गोपासनाधिकरणे ब्रह्मादीनामीशाङ्गाश्रितत्वेनोपासनस्य देवतामात्रकर्तव्यत्वं समर्थ्यते ॥

'**अङ्गेषु यथाश्रयभावः**' इति प्रथमसूत्रे तत्तद्देवानां तत्तदङ्गाश्रितत्व-प्रतिपादकविद्यावैयर्थ्यानुपपत्त्यभिप्रायेणेशाङ्गेषु तत्तदाश्रितत्वेन तत्तद्देवैरुपासनं कर्तव्यमित्युक्तिः ॥

'**शिष्टेश्च**' इति द्वितीयसूत्रे तद्विषये शिक्षाविधायकश्रुतिप्रमाणोक्तिः ॥

'**समाहारात्**' इति तृतीयसूत्रे प्रकाशकत्वादिगुणानां तत्तद्देवानां चोपसंहारफलश्रुतिरूपहेतूक्तिः ॥

'**गुणसाधारण्यश्रुतेश्च**' इति चतुर्थसूत्रे अङ्गाश्रितत्वेनोपासनस्य कर्तव्यत्वे सूर्यादयो भगवच्चक्षुराद्याश्रितत्वेनोपास्याः सूर्याद्याश्रयचक्षुष्ट्वादीनां भगवद्गुणत्वादि-त्यनुमानप्रमाणोक्तिः ॥ ४१ ॥

सूत्रद्वयात्मके द्विचत्वारिंशेऽङ्गोपासननिषेधाधिकरणे[1]ऽङ्गोपासननिषेधो देवान्येषामुच्यते ॥

'**न वा तत्सहभावश्रुतेः**' इति प्रथमसूत्रे सर्वशाखासु तथोपासनस्या-श्रवणादित्यङ्गदेवतोपासनस्य देवान्यैरकर्तव्यत्वे हेतूक्तिः ॥

'**दर्शनाच्च**' इति द्वितीयसूत्रे तदुपोद्बलकश्रुत्युक्तिः ॥ ४२ ॥
क ॥ ३० ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे तृतीयाध्यायस्य तृतीयः उपासनापादः समाप्तः ॥

---

1. Another name नवाधिकरण

## ॥ अथ ज्ञानपादश्चतुर्थः ॥

अत्र मोक्षसाधनानां मध्ये वैराग्यभक्त्युपासनानां निरूपितत्वेन ज्ञानस्यैवावशिष्टस्यावसरप्राप्ततया पूर्वेणास्यावसरसङ्गतिः ॥

अत्र सूत्राण्येकपञ्चाशत् ॥ ५१ ॥ एकादशाधिकरणानि ॥ ११ ॥ अष्टौ कक्ष्याः ॥ ८ ॥

तत्र नवसूत्री प्रथमं पुरुषार्थाधिकरणमेकम्, अपरोक्षज्ञानस्याशेषपुरुषार्थसाधनत्वप्रतिपादकमित्याद्या कक्ष्या ॥

'पुरुषार्थोऽतः शब्दादिति बादरायणः' इति प्रथमसूत्रे स्वमतेन श्रुत्या ज्ञानस्य सर्वपुरुषार्थसाधनत्वसमर्थनम् ॥

'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः' इति द्वितीयसूत्रे जैमिनिमतेन ज्ञानस्य स्वर्गादिसाधनकर्मशेषत्वोक्तिः ॥

'आचारदर्शनात्' इति तृतीयसूत्रे कर्मशेषत्वकल्पनां विना ज्ञानस्यैव सर्वपुरुषार्थहेतुत्वे 'यज्ञेन यज्ञमयजन्त देवाः' इति देवसम्बन्धाचारस्य वैयर्थ्यरूपबाधकोक्तिः ॥

'तच्छ्रुतेः' इति चतुर्थसूत्रे ज्ञानस्य कर्मशेषत्वे 'यदेव' इति श्रुतिरूपसाधकोक्तिः । ज्ञानस्य कर्मशेषत्वं नाम कर्मणैव सिध्यतः स्वर्गादेराधिक्यापादकत्वम् ॥

'समन्वारम्भणात्' इति पञ्चमसूत्रे 'यं यं कामम्' इति श्रुत्युक्तं ज्ञानप्राधान्यं सर्वपुरुषार्थसाधकत्वे यथा नाङ्गीक्रियते तथा 'यदेव' इति श्रुत्युक्तकर्मप्राधान्यमपि नाङ्गीक्रियतामित्याक्षेपपरिहाराय कर्मणः प्राधान्ये 'कर्मैव देहम्' इति निरवकाशप्रमाणोक्तिः ॥

'तद्वतो विधानात्' इति षष्ठसूत्रे ज्ञानस्यैव सर्वपुरुषार्थसाधकत्वे बाधकत्वेनोक्तस्य ज्ञान्याचारस्य मुक्ताचारवल्लीलात्वेन अन्यथासिद्धिशङ्कानिरासाय ज्ञानिनोऽपि कर्मकरणे विध्युक्तिः ॥

'नियमाच्च' इति सप्तमसूत्रे तादृशकर्माकरणे प्रत्यवायोक्तिः ॥

'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इत्यष्टमसूत्रे ज्ञानस्याशेषपुरुषार्थहेतुत्वे बाधकत्वेनोक्तानामाचारविधिनियमानां गतिप्रदर्शनाय स्वमतेन कर्मणो ज्ञानसाध्ये स्वर्गादावाधिक्यापादकत्वरूपज्ञानशेषत्वसमर्थनम् ॥

'तुल्यं तु दर्शनम्' इति नवमसूत्रे कर्मणो ज्ञानस्वरूपातिशयाधायकत्वरूपज्ञानशेषत्वनिराकरणम् ॥ १ ॥ क ॥ १ ॥

द्वितीयं तृतीयं चेत्यधिकरणद्वयं ब्रह्मज्ञानाधिकाररूपैकार्थप्रतिपादकमिति द्वितीया कक्ष्या ॥

त्रिसूत्रात्मके द्वितीये ज्ञानाधिकाराधिकरणे [1]ब्रह्मज्ञानाधिकारो न सर्वेषामित्युच्यते ॥

'असार्वत्रिकी' इति प्रथमसूत्रे सर्वेषां ब्रह्मज्ञाने नाधिकार इति प्रतिज्ञा ॥

'विभागः शतवत्' इति द्वितीयसूत्रे अर्थित्वादिसाम्यात् कथं ब्रह्मज्ञानाधिकारस्यासार्वत्रिकत्वमित्याक्षेपे सदृष्टान्तमर्थित्वादेरप्रयोजकत्वोक्तिः ॥

'अध्ययनमात्रवतः' इति तृतीयसूत्रे साङ्गसफलवेदाध्ययनं ब्रह्मज्ञानाधिकारे प्रयोजकमित्युक्तिः ॥ २ ॥

'नाविशेषात्' इति तृतीयेऽध्ययनाधिकारतारतम्याधिकरणे[2]ऽधिकारिविशेषाध्ययनादौ तारतम्योक्तिः । यावदधिकाराधिकरणे भक्तितारतम्याधिकरणसिद्धेन मुक्तितारतम्येनोपासनाधिकारतारतम्यमुक्तम् । अत्र तु प्रज्ञान्तराधिकरणोक्तब्रह्मज्ञानतारतम्येन तदधिकारतारतम्य मुच्यत इति न पौनरुक्त्यम् ॥ ३ ॥ क ॥ २ ॥

विंशतिसूत्रात्मकं चतुर्थं ज्ञानस्य मोक्षहेतुत्वानियमाधिकरण[3]मपरोक्षज्ञानस्य सदसत्प्रवृत्तावपि मोक्षसाधनस्य नियमप्रतिपादकमिति तृतीया कक्ष्या ॥

'स्तुतयेऽनुमतिर्वा' इति प्रथमसूत्रे 'स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एव' इति श्रुतेः पूर्वपक्षयुक्तयथेष्टाचारविधिपरत्वनिरासाय सर्वज्ञानिसाधारणस्तुतिपरत्वेनानुज्ञामात्रपरत्वेन वा सावकाशत्वोक्तिः ॥

'कामकारेण चैके' इति द्वितीयसूत्रे तु असत्प्रवृत्त्या कुण्ठितशक्तेर्ज्ञानस्य मोक्षसाधनत्वाभावाक्षेपो नेत्यत्र 'कामचाराः' इत्यादिश्रुतिप्रमाणोक्तिः ॥

---

1. Known as असार्वत्रिक्यधिकरण
2. Another Name नाऽविशेषाधिकरण
3. Described as स्तुत्यधिकरण

'उपमर्दं च' इति तृतीयसूत्रे 'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च' इति श्रुत्याऽपरोक्षज्ञाने प्रारब्धकर्मणोऽपि फलह्रासरूपोपमर्दसम्भवे किमु ज्ञानोत्तरकालिककर्मणो मुक्तिसाधनं (वाभावो ?) नेति वक्तव्यमिति कैमुत्यन्यायकथनम् ॥

'ऊर्ध्वरेतःसु च शब्दे हि' इति चतुर्थसूत्रे कामचारिणां ज्ञानिनां मोक्षयोग्यत्वे तद्विजिज्ञासूनां कामचारिणामविज्ञानयोग्यत्वं स्यादिति प्रतिबन्धाक्षेपस्य 'य इमं परमं गुह्यमूर्ध्वरेतःसु भाषयेत्' इत्यादिश्रुत्या सदाचारवत्स्वेव ज्ञानोपदेशविध्युक्त्या निरासः ॥

'परामर्शं जैमिनिरचोदना चापवदति हि' इति पञ्चमसूत्रे 'केन स्यात्' इति श्रुतेः सदाचारनियमाचरणरूपार्थान्तरोक्तिः ॥

'अनुष्ठेयं बादरायणः साम्यश्रुतेः' इति षष्ठसूत्रे प्रथमसूत्रोक्तकामचारानुज्ञानस्य ज्ञानिविषयतया केषाञ्चिदनुष्ठानं केषाञ्चिन्नेत्यनुष्ठेयानां मध्ये कामचारानुमतिरिति विवरणम । यद्यप्यस्य सूत्रस्य प्रथमसूत्रानन्तरत्वं युक्तं, तथापि जैमिनिमतापेक्षया अस्य मते स्वारस्यज्ञापनायात्रोक्तिः ॥

'विधिर्वा धारणवत्' इति सप्तमसूत्रे 'केन स्यात्' इति श्रुतेः स्वमतेनैव पुनः स्वेच्छाचारविधायकत्वरूपार्थान्तरोक्तिः ॥

'स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्' इत्यष्टमसूत्रे 'सन्ध्यामुपासीत' इत्यादिसामान्यविधेर्ज्ञानिनामपि स्वीकारे 'तत्केन स्यात्' इत्यादिश्रुतिः स्तुतिमात्रं न विधिरित्याक्षेपनिरासाय ज्ञानिनां ब्रह्माधीनत्वोक्तिः ॥

'भावशब्दाच्च' इति नवमे सूत्रे ज्ञानिनां स्वेच्छाचारविधौ 'यथाविधानमपरः' इत्यादिश्रुतिरूपस्पष्टप्रमाणोक्तिः ॥

'पारिप्लवार्था इति चेन्न विशेषितत्वात्' इति दशमसूत्रे 'केन स्यात्' इति श्रुतेर्नियमेन सर्वाचरणं तन्मध्य एव कामचारो यथेष्टाचारविधिश्चेति परस्परविरुद्धार्थप्रतिपादकत्वेनाव्यवस्थामाशङ्क्य 'त्रेधा हि ज्ञानिनः' इत्यादिश्रुत्या ज्ञानिनां त्रिविधत्वात्तद्विवक्षया 'केन स्यात्' इति श्रुतेस्तादृशार्थकत्वमिति तत्परिहारः ॥

'तथा चैकवाक्योपबन्धात्' इत्येकादशसूत्रे ज्ञानिनाम् अनेकप्रकारत्वोक्तिः श्रुतिविहितसदाचारेष्वेवाविधिबन्धेन नियमेन वर्तनमिति जैमिनिमतं,

ज्ञानिमानुषविषयम् । अनुष्ठेयकर्ममध्य एव केषाञ्चिन्निवृत्तिरन्येषां कामचारानुमतिरिति व्यासमतम् । तदेव स्तुतिविषयं विधिर्वेति विरिञ्चविषयमिति प्रकृतोपयोगोक्तिः ॥

'अत एव चाग्नीन्धनाद्यनपेक्षा' इति द्वादशे सूत्रे सदसत्प्रवृत्तिभ्यां विशेषस्वीकारे ज्ञानस्य मोक्षजनकत्वे सत्प्रवृत्तिसापेक्षत्वं स्यादित्याक्षेपस्य कामचारश्रुतिबलेन निरासः ॥

'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति त्रयोदशसूत्रे कामचारश्रुत्याऽसत्प्रवृत्तेर्मोक्षाप्रतिबन्धकत्वासिद्धावपि सत्प्रवृत्तेस्तदकारणत्वासिद्ध्या ज्ञानस्य मोक्षजनकत्वेऽग्निहोत्रादिसापेक्षत्वमुच्यते, अथ वा ज्ञानोत्तरकालिककर्मसापेक्षत्वमिति विकल्प्य पूर्वकालीनकर्मणो ज्ञानोत्पत्तावेवोपयोगित्वे प्रमाणोक्त्या प्रथमपक्षस्य परिहारः ॥

'शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्' इति चतुर्दशे सूत्रे ज्ञानोत्तरकालीनसत्कर्मणो ज्ञानप्रतिष्ठापकत्वे सम्पूर्णफलजनकत्वे च प्रमाणोक्त्या द्वितीयपक्षस्य परिहारः । तथा चात्र 'तु'-शब्देन सत्प्रवृत्तेः पूर्णफलत्वोक्त्याऽसत्प्रवृत्तेरल्पफलार्थत्वं सूचितम् ॥

'सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्' इति पञ्चदशे सूत्रे पूर्वोक्तविषये 'यदिह वा' इति श्रुतिविरोधशङ्कायां तस्याः श्रुतेः प्राणात्ययविषयत्वेन सावकाशत्वोक्त्या परिहारः ॥

'अबाधाच्च' इति षोडशसूत्रे ज्ञानिनः सदसत्प्रवृत्तौ विशेषो नास्तीत्युक्ते कोऽर्थः ? असत्प्रवृत्त्यकरणे बाधकसत्त्वाद्वा असत्प्रवृत्तित्यागे प्रमाणाभावाद्वा सत्प्रवृत्त्यकरणे बाधकाभावाद्वेति विकल्पेष्वसत्प्रवृत्त्यकरणे बाधकाभावोक्त्या प्रथमकल्पपरिहारः ॥

'अपि स्मर्यते' इति सप्तदशे सूत्रे असत्प्रवृत्तित्यागे 'अतातीनागत' इत्यादिस्मृतिप्रमाणोक्त्या द्वितीयकल्पवारणम् ॥

'शब्दश्चातोऽकामचारे' इत्यष्टादशसूत्रे पूर्वोक्तस्मृत्युपोद्बलकश्रुत्युक्तिः ॥

अल्पफलत्वरूपबाधकोक्त्या सत्प्रवृत्त्यकरणे बाधकाभावाद्वेति तृतीयकल्पनिरासः । यद्यपि 'सर्वान्नानुमतिः' इत्यादिसूत्रचतुष्टयस्यासत्प्रवृत्तावपि

विशेषसमर्थनपरस्य विन्यासः 'कामकारः' इत्यादिसूत्रत्रयविन्यासोक्त एव कार्यः, तथाप्यसत्प्रवृत्तौ ज्ञानस्य विशेषाङ्गीकारे मोक्षानुपपत्तिशङ्कासमाधानं पूर्वसूत्रत्रयेण क्रियते । अत्र सूत्रचतुष्टये त्वानन्दह्रासहेतुत्वादिना असत्प्रवृत्तेरकार्यत्वं समर्थ्यत इति वैलक्षण्यप्रदर्शनाय व्यवधानं बोध्यम् ॥

'विहितत्वाच्चाश्रमकर्मापि' इत्येकोनविंशे सूत्रे असत्प्रवृत्तेरकर्तव्यत्वमस्तु, ह्रासकारणत्यागे ज्ञानादेव पूर्णफलप्राप्तौ सत्कर्मणः कर्तव्यत्वं मास्त्विति शङ्कायां विहितत्वात् सत्कर्मणः कर्तव्यत्वोक्त्या तत्परिहारः । 'शमदमाद्युपेतः' इत्यत्र शान्त्यादेर्ज्ञानप्रतिष्ठापकतयानन्दवृद्धिहेतुत्वेन विहिततया च कर्तव्यत्वोक्तिः । अत्र तु वर्णाश्रमोचितकर्मणां विहितत्वेनानन्दवृद्धिरूपफलवत्त्वेन च कर्तव्यत्वोक्तिरिति भेदः ॥

'सहकारित्वेन च' इति विंशतितमे सूत्रे विहितमपि कर्म निष्फलत्वात् कथं कर्तव्यमित्याशङ्कानिरासाय वर्णाश्रमोचितकर्मण आनन्दाभिवृद्धौ ज्ञानसहकारित्वेन सफलत्वोक्तिः ॥ ४ ॥ क ॥ ३ ॥

पञ्चमं षष्ठमित्यधिकरणद्वयमपरोक्षज्ञानादेरधिकारिमात्रप्राप्यत्वं समर्थयतीति चतुर्थी कक्ष्या ॥

तत्र सप्तसूत्रके पञ्चमे ज्ञानाधिकारिकत्वाधिकरणे ज्ञानस्याधिकारिमात्रप्राप्यत्वं कथ्यते ॥

'सर्वथापि तु त एवोभयलिङ्गात्' इति प्रथमसूत्रे ज्ञानस्याधिकारिमात्रप्राप्यत्वलिङ्गोक्तिः । किं च सर्वथापीत्यंशेन ज्ञानस्यानधिकारिप्राप्यत्वे निमित्तत्वेनाशङ्कितस्य प्रयत्नस्याप्रयोजकत्वोक्तिः ॥

'अनभिभवं च दर्शयति' इति द्वितीयसूत्रे प्रयत्नविशेषेण स्वभावाभिभवेनानधिकारिप्राप्यत्वशङ्कापरिहाराय स्वभावानभिभवे "दैवीमेव" इत्यादि प्रमाणोक्तिः ॥

'अन्तरा चापि तु तद्दृष्टेः' इति तृतीयसूत्रे दृढासुरस्वभावाभिभवासम्भवेऽप्यतथाभूतमध्यममनुष्यस्वभावाभिभवसम्भवादनधिकारिप्राप्यत्वमेव ज्ञानस्येत्याशङ्कायां तत्स्वभावस्याप्यनभिभवप्रयोजकदार्ढ्योक्तिः ॥

'अपि स्मर्यते' इति चतुर्थसूत्रे स्वभावानभिभवे स्मृत्युक्तिः ॥

'अतस्त्वितरज्ज्यायो लिङ्गाच्च' इति पञ्चमसूत्रेऽसुरस्वभावानभिभवे प्रामाणिकासुरभागाधिक्यरूपहेतूक्तिः ॥

'विशेषानुग्रहं च'[1] इति षष्ठसूत्रे सम्यग्ज्ञानतत्फलयोरधिकारिमात्र-प्राप्यत्वे ईश्वरानुग्रहविषयत्वरूपहेत्वन्तरोक्तिः ॥

'तद्भूतस्य तु तद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' इति सप्तमसूत्रे स्वोक्तार्थे प्रामणसिद्धजैमिन्याचार्यसम्मत्युक्तिः ॥ ५ ॥

त्रिसूत्रात्मके षष्ठे पदाधिकाराधिकरणेऽपरोक्षज्ञाननियतदेवादिपदस्याधि-कारिमात्रप्राप्यत्वं प्रतिपाद्यते ॥

'न चाधिकारिकमपि पतनानुमानात्तदयोगात्' इति प्रथमसूत्रे देवतापदस्यानाकाङ्क्ष्यत्वेऽनुमानप्रमाणोक्तिः ॥

'उपपूर्वमपीत्येके भावशमनवत्तदुक्तम्' इति द्वितीयसूत्रे देवतापद-स्यानाकाङ्क्ष्यत्वे कैमुत्यन्यायोक्तिः ॥

'बहिस्तूभयथापि स्मृतेराचाराच्च' इति तृतीये सूत्रे शुभत्वाविशेषा-ज्ज्ञानभक्त्यादीनामप्यनाकाङ्क्ष्यत्वशङ्कायां तन्निरासायाचारप्रतिपाद्यवाक्यरूप-हेतूक्तिः ॥ ६ ॥ क ॥ ४ ॥

सूत्रत्रयात्मकं सप्तमं स्वाम्यधिकरणमेकमपरोक्षज्ञानस्य स्वनियामकदेवा-नामपि फलप्रदत्वप्रतिपादकमिति पञ्चमी कक्ष्या ॥

'स्वामिनः फलश्रुतेरित्यात्रेयः' इति प्रथमसूत्रे प्रेरकदेवानां ज्ञान-फलं न प्रजानामिति पूर्वपक्षोक्तिः ॥

'आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते' इति द्वितीयसूत्रे प्रजानामपि ज्ञानफलमस्तीति सिद्धान्तोक्तौ औडुलोमिमतम् ॥

'सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्' इति तृतीयसूत्रे देवानां प्रजानां च ज्ञानदाने मुख्यामुख्यकारणत्वोक्त्या फलतारतम्य-रूपस्वपक्षोक्तिः ॥ ७ ॥ क ॥ ५ ॥

---

1. This apothegm is numbered as the 5th in other Editions

सूत्रद्वयात्मकमष्टमं यत्यधिकरणमेकमपरोक्षज्ञानाधिकारिषु यतीनां गृहस्थादिभ्योऽतिशयप्रतिपादकमिति षष्ठी कक्ष्या ॥

'कृत्स्नभावात्तु गृहिणोपसंहारः' इति प्रथमसूत्रे यतीनामुत्तमत्वसाधनतया परोपन्यस्तायाः "कुटुम्बे शुचौ देशे" इत्यादि श्रुतेः सहेतुकं देवतापरत्वकथनम् ॥

'मौनवदितरेषामप्युपदेशात्' इति द्वितीयसूत्रे देवानां यतिभ्योऽप्युत्तमत्वे सर्ववर्णाश्रमत्वकथनम् ॥ ८ ॥ क ॥ ६ ॥

'अनाविष्कुर्वन्नन्वयात्' इति नवमं गोप्याधिकरणमेकमपरोक्षज्ञानस्य गोप्यत्वसाधकमिति सप्तमी कक्ष्या ॥ ९ ॥ क ॥ ७ ॥

दशमैकादशाधिकरणद्वयं प्रतिबन्धाभावेऽपेक्षितप्राप्तिरूपैकार्थप्रतिपादक-मित्यष्टमी कक्ष्या ॥

'ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात्' इति दशमे प्राप्त्यधिकरणे मोक्षसाधनज्ञानस्य प्रतिबन्धाभावे प्रकृतजन्मन्येव प्राप्तिः कथ्यते १० ॥

'एवं मुक्तिफलानियमः तदवस्थावधृतेः तदवस्थावधृतेः' इति इत्येकादशे क्षिप्रप्रसादाधिकरणे ज्ञानफलमोक्षस्य प्रतिबन्धकाभावे प्रस्तुतशरीरानन्तरमेव प्राप्तिरिति समर्थ्यते ॥ ११ ॥ क ॥ ८ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे तृतीयाध्यायस्य चतुर्थः ज्ञानपादः समाप्तः ॥

समाप्तश्च तृतीयः साधनाध्यायः

## ॥ अथ चतुर्थोऽध्यायः ॥

कंसध्वंसिपदक्रान्तिः सन्मार्गाभोगसाधिका ।
सूत्रार्थामृतलहरी सफलास्वाद्यतां बुधैः ॥

'अथातो ब्रह्मजिज्ञासा' इति शास्त्रपीठसूत्रे प्रथमद्वितीयाध्यायाभ्यां ब्रह्मपदार्थस्य तृतीयाऽध्याये 'अथ' 'जिज्ञासा' पदार्थयोश्च विचारितत्वेन 'अतः' शब्दार्थफलस्यैवावशिष्टतया तस्यात्र निरूपणं क्रियत इति पूर्वाध्यायविचारितविरक्त्यादिसाधनसाधितब्रह्मदर्शनस्य फलजिज्ञासायां तदत्र कथ्यत इति च पूर्वाध्यायेनास्यावसरसङ्गतिः, कार्यकारणभावसङ्गतिश्च ॥

प्रायशः फलनिरूपणादस्य फलाध्याय इति व्यपदेशः ॥

अशीतिरत्र सूत्राणि ॥ ८० ॥ पञ्चत्रिंशत्तथा नयाः ॥ ३५ ॥

कक्ष्यास्तु द्वादश प्रोक्ताः ॥ १२ ॥ फलाध्याये चतुर्थके ॥

मोक्षलक्षणज्ञानफलस्य कर्मक्षयोत्क्रान्तिमार्गभोगभेदेन चातुर्विध्यात् पूर्वपूर्वानन्तरमुत्तरोत्तरस्य भावित्वात् 'कर्मक्षयपादः' इति प्रथमस्य, 'उत्क्रान्तिपादः' इति द्वितीयस्य 'मार्गपादः' इति तृतीयस्य 'भोगपादः' इति चतुर्थस्य च व्यपदेशः ॥

तत्र प्रथमपादे एकोनविंशतिसूत्राणि ॥ १९ ॥ अष्टावधिकरणानि ॥ ८ ॥ द्वे कक्ष्ये ॥ २ ॥ प्रथमनयमारभ्य नयसप्तकं मोक्षरूपफलस्यान्तरङ्गतया अवश्यम्भाविसाधनविचारपरत्वेन प्रथमा कक्ष्या ॥

[1]योगद्वयात्मके प्रथमे आवर्तननये श्रवणाद्यावृत्तेर्नित्यं कर्तव्यत्वसमर्थनम् ॥

'आवृत्तिरसकृदुपदेशात्' इति प्रथमयोगे श्रवणाद्यावृत्तेः कर्तव्यतायामसकृदुपदेशरूपहेतूक्तिः ॥

'लिङ्गाच्च' इति द्वितीययोगे श्रवणमनननिदिध्यासनानां त्रयाणामावृत्तेः कर्तव्यत्वोक्तिः ॥

अत एव 'अनेन श्रवणावृत्तेः कर्तव्यता सिद्धा । त्रयाणामप्यावृत्तिं साधयल्लिङ्गाच्च इति सूत्रम्' इति सुधा । एवमेव तन्त्रदीपिका अपि ॥ १ ॥

'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति द्वितीये आत्मोपासननये आत्मोपासनस्य नित्यशः कर्तव्यत्वं साध्यते ॥ २ ॥

'न प्रतीके न हि सः' इति तृतीये प्रतीकनये आत्मप्रतीकयोरैक्योपासननिवारणम् ॥ ३ ॥

'ब्रह्मदृष्टिरुत्कर्षात्' इति चतुर्थे ब्रह्मदृष्टिनये ब्रह्मत्वोपासनस्यावश्यकर्तव्यत्वसाधनम् ॥ ४ ॥

'आदित्यादिमतयश्चाङ्ग उपपत्तेः' इति पञ्चमे स्वोत्पत्त्यङ्गोपासननये स्वेषां स्वोत्पत्त्यङ्गाश्रितत्वेन परब्रह्मोपासनस्य देवैः कर्तव्यत्वसमर्थनम् ॥

---

1. The author uses the term योग instead of the familiar सूत्र

उपासनापादे 'अङ्गेषु यथाश्रयभावः' इत्याद्यधिकरणद्वयोक्तस्यार्थस्यावश्यकत्वद्योतनाय पुनरुक्तिः ॥ ५ ॥

योगपञ्चकात्मके षष्ठे आसननये ज्ञानसाधनेषु प्रधानभूतध्यानाङ्गासननियमसमर्थनम् ॥

'आसीनः सम्भवात्' इति प्रथमयोगे आसनस्यावश्यकत्वे उपासनाकारणत्वरूपहेतूक्तिः ॥

'ध्यानाच्च' इति द्वितीययोगे स्मरणात्मकस्य सर्वदोपासनस्यासननियमाभावेऽपि ध्यानात्मकविशेषोपासन एवासनादिनियमस्यावश्यकत्वमभिप्रेत्योपासनस्य ध्यानत्वकथनम् ॥

'अचलत्वं चापेक्ष्य' इति तृतीययोगे आसननियमफलस्य चित्तविक्षेपाभावस्य प्रत्याहारादिना अन्यथासिद्धिपरिहारः ॥

'स्मरन्ति च' इति चतुर्थयोगे आसनस्यावश्यकत्वे प्रमाणोक्तिः ॥

'यत्रैकाग्रता तत्राविशेषात्' इति पञ्चमयोगे आसनादिनियमवद्देशकालादिनियमोऽप्यस्तु 'पर्वताग्रे नदीतीरे' 'ब्राह्मे मुहूर्ते चोत्थाय' इत्यादिप्रमाणसत्त्वादित्याशङ्काया अविशेषादिति हेतूक्त्या परिहारः कृतः ॥ ६ ॥

'आप्रायणात्तत्रापि हि दृष्टम्' इति सप्तमे ध्यानन्ये ज्ञानिनामपि ध्यानस्याऽऽमोक्षं कर्तव्यत्वसमर्थनम् ॥ ७ ॥ क ॥ १ ॥

योगसप्तकात्मकम् अष्टमं कर्मक्षयाधिकरणमेकं कर्मक्षयलक्षणमोक्षप्रतिपादकमिति द्वितीया कक्ष्या ॥

'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति प्रथमयोगे ब्रह्मज्ञानस्य ज्ञानिकृतपूर्वोत्तरपापविनाशाश्लेषहेतुत्वे 'तद्यथा पुष्करपलाश आपः' इत्यादि 'तद्यथेषीकतूलमग्नौ' इत्यादि प्रमाणोक्तिः ॥

'इतरस्याप्येवमसंश्लेषः पाते तु' इति द्वितीययोगे मिथ्याज्ञानस्य मिथ्याज्ञानिकृतपूर्वोत्तरपुण्यविनाशाश्लेषहेतुत्वोक्तिः ॥

'अनारब्धकार्ये एव तु पूर्वे तदवधेः' इति तृतीययोगे यद्येवं ब्रह्मज्ञानिद्वेषिणोर्ज्ञानद्वेषाभ्यामेव पापपुण्यक्षयः, तर्हि ज्ञानद्वेषयोरुत्पत्त्यामेव मोक्ष-

तमसोः प्राप्तिप्रसङ्ग इत्याशङ्कानिरासाय निरुक्तविनाशाश्लेषात्र प्रारब्धपुण्यपापयोरेव, न तु प्रारब्धयोरित्युक्तम् ॥

'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इति चतुर्थयोगे ज्ञानिकृतपापस्य ज्ञानेन नाशाश्लेषसत्त्वेऽपि ज्ञानिकृतपूर्वोत्तरपुण्यरूप-प्रतिबन्धकसत्त्वेन कथं मोक्ष इत्याशङ्कायां तत्पुण्यं किं काम्यमकाम्यं वेति विकल्प्य अकाम्यस्य मोक्षेऽनुप्रवेशोक्तिः ॥

'अतोऽन्यदपि इत्येकेषामुभयोः' इति पञ्चमयोगे अनिष्टकाम्यस्य विनाशाश्लेषोक्तिः ॥

'यदेव विद्ययेति हि' इति षष्ठयोगे नाशशिरस्काल्पफलस्य कर्मणः कथं मोक्षेऽनुप्रवेश इत्याक्षेपे ज्ञानिकृताकाम्यकर्मणस्तादृशवीर्यवत्त्वोक्तिः ॥

'भोगेन त्वितरे क्षपयित्वाथ सम्पत्स्यते' इति सप्तमयोगे ज्ञानिद्वे-षिणोः प्रारब्धपुण्यपापसत्त्वात् कथं मोक्षतमसी इत्याक्षेपपरिहाराय तयोर्भोगेन नाश इत्युक्तिः ॥ ८ ॥ क ॥ २ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-कक्ष्याविभागे चतुर्थाध्यायस्य प्रथमः कर्मक्षयपादः समाप्तः ॥

## ॥ अथोत्क्रान्तिपादो द्वितीयः ॥

यद्यपि देवानां स्वोत्तमप्रवेशरूपलयः, तदन्येषामुत्क्रान्तिरित्याधिकारिभेदेन कथ्यते तथापि देवानां स्वोत्तमप्रवेशेन तत्र देहक्षयस्य तदन्येषां ब्रह्मनाड्योत्क्रम्य देहक्षयस्य च सत्त्वाद्देहक्षयापरपर्यायोत्क्रान्तित्वेनैकीकृत्योत्क्रान्तिपाद इत्युपासना-पादवद्व्यपदेशः ॥

अत्र द्वाविंशतिः सूत्राणि ॥ २२ ॥ दशाधिकरणानि ॥ १० ॥ षट् कक्ष्याः ॥ ६ ॥

तत्र प्रथमद्वितीयतृतीयनयत्रयं देवानां देहलयप्रतिपादकत्वेन प्रथमा कक्ष्या॥

योगद्वयात्मके प्रथमे वाग्लयाधिकरणे वाचो मनसि लयसमर्थना ॥

'वाङ्मनसि दर्शनाच्छब्दाच्च' इति प्रथमयोगे प्रत्यक्षागमरूप-विशेषप्रमाणोक्तिः ॥

'अत एव च सर्वाण्यनु' इति द्वितीययोगे सर्वदेवानां स्वनियामक-देवविशेषे लये श्रुतिप्रमाणोक्तिः ॥ १ ॥

'तन्मनः प्राण उत्तरात्' इति द्वितीये मनोलयाधिकरणे मनसः प्राणे लयसमर्थनम् ॥ २ ॥

'सोऽध्यक्षे तदुपगमादिभ्यः' इति तृतीये प्राणलयाधिकरणे प्राणस्य परमात्मनि लयसमर्थनम् ॥ ३ ॥ क ॥ १ ॥

चतुर्थपञ्चमात्मकनयद्वयं प्रागुक्तान्यदेवानां भूतेषु लयप्रतिपादकमिति द्वितीया कक्ष्या ॥

'भूतेषु तच्छ्रुतेः' इति चतुर्थे देवलयाधिकरणे देवानां सामान्यतो भूतेषु लयसमर्थनम् ॥ ४ ॥

'नैकस्मिन् दर्शयतो हि' इति पञ्चमे देवविशेषलयाधिकरणे सर्वभूतेष्वपि देवानां विशेषतो लयसमर्थनम् ॥ ५ ॥ क ॥ २ ॥

योगाष्टकं षष्ठं प्रकृतिलयाभावाधिकरणमेकं प्रकृतेर्देहलयाभावप्रतिपाद-कमिति तृतीया कक्ष्या ॥

'समना चासृत्युपक्रमादमृतत्वं चानुपोष्य' इति प्रथमयोगे प्रकृतेर्लयाभावसाधकनित्यमुक्तत्वे सर्वगतत्वादिहेतूक्तिः ॥

'तदपीतेस्संसारव्यपदेशात्' इति द्वितीययोगे लक्ष्म्या नित्यमुक्तत्वाङ्गी-कारे ईशेन सर्वसाम्यं स्यादिति शङ्कायां तस्या अमोचकत्वोक्त्या तत्परिहारः ॥

'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः' इति तृतीययोगे ईशस्य प्रकृतेरपि सूक्ष्मत्वे ज्ञानानन्दाद्याधिक्ये च प्रमाणोक्तिः ॥

'नोपमर्देनातः' इति चतुर्थयोगे प्रकृतेः सर्वसाम्याभावे नित्यमुक्त-त्वादिना साम्यमपि न स्यादित्याक्षेपपरिहारायेशगुणासाधारण्यानुपमर्देन नित्य-मुक्तत्वादिना किञ्चित्साम्योक्तिः ॥

'अस्यैव चोपपत्तेरूष्मा' इति पञ्चमयोगे किञ्चित्साम्य एव 'द्विधा हीदम्' इत्यूष्मश्रुतिप्रमाणोक्तिः ॥

'प्रतिषेधादिति चेन्न शारीरात्' इति षष्ठे योगे लक्ष्म्या ईशेन किञ्चित्साम्यस्य 'असमैव' इति श्रुतिविरोधमाशङ्क्य तस्या जीवविषयकत्वोक्त्या तत्परिहारः ॥

'स्पष्टो ह्येकेषाम्' इति सप्तमयोगे सामान्यश्रुतेर्जीवविषयकत्वसिद्धये ईश्वरेण प्रकृतेः किञ्चित्साम्ये जीवानामत्यन्तासाम्ये 'अथ समाश्चासमाश्च' इति श्रुतिप्रमाणोक्तिः ॥

'स्मर्यते च' इत्यष्टमयोगे तत्रैव 'मत्स्यकूर्मवराहाद्याः' इति प्रमाणोक्तिः ॥ ६ ॥ क ॥ ३ ॥

'तानि परे तथा ह्याह' इति सप्तमं प्राणद्वारकलयाधिकरणमेकं सर्वेषां देवानां प्राणद्वारा परमात्मनि लयसमर्थकम्, 'सर्वे देवाः प्राणमाविश्य' इति श्रुतिप्रमाणं वक्तीति तुरीया कक्ष्या ॥ ७ ॥ क ॥ ४ ॥

'अविभागो वचनात्' इत्यष्टमं मुक्तानामीशाधीनत्वाधिकरणमेकं मुक्तानां भगवदधीनत्वं समर्थयति, 'कामेन मे' इति श्रुतिं चाहेति पञ्चमी कक्ष्या ॥ ८ ॥ क ॥ ५ ॥

नवमदशमात्मकं नयद्वयमुत्क्रान्तिविषयेत्विन षष्ठी कक्ष्या ॥

योगपञ्चकात्मके मनुष्योत्क्रान्तिनये नवमे मनुष्याणां मोक्षार्थं देहोत्क्रान्तिसमर्थनम् ॥

'तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया' इति प्रथमयोगे [अज्ञानि] मरणवैलक्षण्याय ज्ञानिमरणहेतुना हृदयाग्रज्वलनप्रकाशितद्वारवत्स्वरूपवैशेष्यान्तरोक्तिः ॥

'रश्म्यनुसारी' इति द्वितीययोगे तत्प्रकाशितद्वारा निष्क्रामतीत्युक्ते नाड्यन्तस्तमसैव गमनं स्यात्—नाड्यन्तरपि प्रकाशोऽस्तीत्युक्ते द्वारपदवैयर्थ्यमित्याक्षेपं नाड्यन्तराततसौररश्म्यनुसारेणोत्क्रमणात् द्वारपदसार्थक्यकथनम् ॥

'निशि नेति चेन्न सम्बन्धात्' इति तृतीययोगे रात्रावपि पर्यवसितकर्मणां ज्ञानिनां मोक्षार्थोत्क्रमणसिद्ध्यर्थं रात्रौ रश्म्यभावमाशङ्क्य सर्वदा रश्मिसद्भावोक्तिः ॥

'यावद्देहभावित्वाद्दर्शयति च' इति चतुर्थयोगे उक्तार्थे सप्रमाणकं यावद्देहभावित्वरूपहेतूक्तिः ॥

'अतश्चायनेऽपि हि दक्षिणे' इति पञ्चमयोगे 'दक्षिणे मरणाद्याति स्वर्गम्' इत्यादिस्मृत्या ज्ञानिनां दक्षिणायनमरणाभावसिद्धौ तद्वद्रात्रावप्युत्क्रमणाभावात्तथा रश्मिसद्भावप्रतिपादनं व्यर्थमित्याशङ्कापरिहाराय 'उत्तरं दाक्षिणमिति त एव निगद्यते' इत्याद्यनुसारेण पूर्वोक्तस्मृते रश्म्यर्थत्वेन तद्दृष्टान्तेन रात्रावुत्क्रमणाभावकथनं युक्तमित्यभिप्रेत्य लोकप्रसिद्धदाक्षिणायनेऽपि ज्ञानिनामुत्क्रमणोक्तिः ॥ ९ ॥

'योगिनः प्रति स्मर्येते स्मार्ते चैते' इति दशमे गतिस्मरणनये उत्क्रमणोपयुक्तगतिस्मरणस्यावश्यकत्वसमर्थनम् ॥ १० ॥ क ॥ ६ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे चतुर्थाध्यायस्य द्वितीयः उत्क्रान्तिपादः समाप्तः ॥

## ॥ अथ मार्गपादस्तृतीयः ॥

अत्र ब्रह्मनाड्योत्क्रान्तानां चतुर्मुखप्राप्तौ मार्गः, यथागत्येषां देवानां [अन्येषां] च गम्यं इति द्वयं कथ्यते । षोडश सूत्राणि ॥ १६ ॥ षडधिकरणानि ॥ ६ ॥ तिस्रः कक्ष्याः ॥ ३ ॥ आद्यं नयत्रयं मार्गविचारपरमिति प्रथमा कक्ष्या ॥

'अर्चिरादिना तत्प्रथितेः' इति प्रथमेऽर्चिर्नये ब्रह्मप्राप्तिमार्गेष्वर्चिषः प्राथम्योक्तिः ॥ १ ॥

'वायुशब्दादविशेषविशेषाभ्याम्' इति द्वितीये वायुनये वायोः द्वितीयत्वोक्तिः ॥ २ ॥

'तटितोऽधि वरुणःसम्बन्धात्' इति तृतीये तटिन्नये तटितः संवत्सरानन्तर्यस्य वरुणस्य तटिदानन्तर्यस्य चोक्तिः ॥ ३ ॥ क ॥ १ ॥

चतुर्थपञ्चमनयद्वयं वायुविचारपरत्वेन द्वितीया कक्ष्या ॥

योगद्वयात्मके चतुर्थे आतिवाहिकनये अर्चिषोऽनन्तरप्राप्यस्य वायोः आतिवाहिकत्वसमर्थनम् ॥

'आतिवाहिकः तल्लिङ्गात्' इति प्रथमयोगे कस्यचिन्मुख्यप्राणपुत्रस्य वायोरातिवाहिकत्वे पूर्वप्राप्यत्वरूपलिङ्गोक्तिः ॥

'उभयव्यामोहात्तत्सिद्धेः' इति द्वितीययोगे अन्ते प्राप्यस्य वायोर्द्वितीय-वायुभिन्नत्वे दिवस्पतित्वरूपहेतूक्तिः ॥

'वैद्युतेनैव (ततः) तच्छ्रुतेः' इति पञ्चमे वैद्युतनये अन्तप्राप्यवायो-र्मुख्यत्वोक्तिः ॥ ५ ॥ क ॥ २ ॥

योगदशकात्मकं षष्ठं गम्याधिकरणमेकं गम्यप्रतिपादकमिति तृतीया कक्ष्या ॥

'कार्यं बादरिरस्य गत्युपपत्तेः' इति प्रथमयोगे चतुर्मुखस्य प्राप्यत्वे गत्युपपत्तिरूपहेतूक्तिः ॥

'विशेषितत्वाच्च' इति द्वितीययोगे तदुपोद्बलकत्वेन 'प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति श्रुत्युक्तिः ॥

'सामीप्यात्तु तद्व्यपदेशः' इति तृतीययोगे 'ब्रह्मविदाप्नोति परम्' इति श्रुतिविरोधपरिहाराय तच्छ्रुतेः कालतो ब्रह्मप्राप्त्यर्थकत्वोक्तिः ॥

'कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्' इति चतुर्थ-योगे लयात् प्राग्बद्धत्वेन परप्राप्त्यसम्भवात् कथं निरुक्तश्रुतेर्ब्रह्मप्राप्त्यर्थकत्वमिति शङ्कायां सामीप्यशब्दस्य विवक्षितार्थकत्वे 'ते ह ब्रह्माणम्' इत्यादिश्रुति-प्रमाणोक्तिः ॥

'स्मृतेश्च' इति पञ्चमयोगे तत्रैव 'ब्रह्मणा सह' इति स्मृति-प्रमाणोक्तिः ॥

'परं जैमिनिर्मुख्यत्वात्' इति षष्ठयोगे 'स एनान् ब्रह्म गमयति' इति श्रुतौ ब्रह्मशब्दस्येशपरत्वे मुख्यत्वरूपहेतूक्तिर्जैमिनिमते ॥

'दर्शनाच्च' इति सप्तमे योगे मुख्यत्वे 'ब्रह्मणा सह' इत्यादिप्रमाणानु-पपत्त्याऽऽशङ्कायां श्रवणादिसाधनैरपरोक्षतया परस्यैव ब्रह्मणो दर्शनादिति हेतूक्त्या परिहारः ॥

'न च कार्ये प्रतिपत्त्यभिसन्धिः' इत्यष्टमसूत्रे त्वमुख्यार्थस्वीकारे उपासनसहितेच्छाविषयत्वरूपबाधकोक्तिः ॥

'अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च' इति नवमे योगे मुख्यामुख्ययोरपि प्राप्यत्वरूपसिद्धान्तोक्तिः ॥

'विशेषं च दर्शयति' इति दशमयोगे विद्युत्पतिर्वायुरप्रतीकालम्बनान् परं ब्रह्म नयत्यन्यान् कार्यं ब्रह्म नयतीत्यर्थे 'अन्तःप्रकाशाः' इत्यादिश्रुतिप्रमाणोक्तिः ॥ ६ ॥ क ॥ ३ ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूपकक्ष्याविभागे चतुर्थाध्यायस्य तृतीयः मार्गपादः समाप्तः ॥

## ॥ अथ भोगपादश्चतुर्थः ॥

अत्र चतुर्मुखेन सह परं ब्रह्म प्राप्तानां मुक्तानां भोगो निरूप्यते । अत्र सूत्राणि त्रयोविंशतिः ॥ २३ ॥ अधिकरणान्येकादश ॥ ११ ॥ एकादशानामप्यधिकरणानां भोगविषयकत्वेनैकैव कक्ष्या ॥

'सम्पद्या विहाय स्वेन शब्दात्' इति प्रथमे भोगानुभवाधिकरणे मुक्तस्य ब्रह्मानतिक्रमेण भोगानुभवसमर्थनम् ॥ १ ॥

'मुक्तः प्रतिज्ञानात्' इति द्वितीये मुक्ताधिकरणे परं ब्रह्म प्राप्य तदनतिरेकेण भोगाननुभोक्तुर्मुक्तत्वसमर्थनम् ॥ २ ॥

'आत्मा प्रकरणात्' इति तृतीये ज्योतिरात्मनये 'परं ज्योतिरुपसम्पद्या' इति श्रुतौ मुक्तप्राप्यस्य ज्योतिष्ट्वोक्त्या कथं ब्रह्मानतिक्रमेण मुक्तस्य भोगानुभव इत्याशङ्कायां ज्योतिषो ब्रह्मत्वसमर्थनम् ॥ ३ ॥

'अविभागेन दृष्टत्वात्' इति चतुर्थे सायुज्याधिकरणे सायुज्यभाजामीशाभुक्तभोक्तृत्वसमर्थनम् ॥ ४ ॥

योगत्रयात्मके पञ्चमे देहव्यवस्थाधिकरणे मुक्तस्य देहाभावप्रयुक्तभोक्तृत्वाभावशङ्कानिरासः ॥

'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इति प्रथमसूत्रे सायुज्यभाजां देहाभावेऽपि 'ब्रह्मणा पश्यति' इत्यादिश्रुत्या 'आदत्ते हरिर्हस्ताभ्याम्' इत्यादिस्मृत्या च भोगोपपत्तिकथनम् ॥

'चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः' इति द्वितीययोगे तेषां कादाचित्कबाह्यभोगसाधनतया चिन्मात्रदेहसमर्थनम् ॥

'एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः' इति तृतीययोगे जैमिन्यौडुलोमिमतयोरविरोधकथनम् ॥ ५ ॥

'सङ्कल्पादेव च तच्छ्रुतेः' इति षष्ठे सङ्कल्पाधिकरणे सङ्कल्पमात्रेण मुक्तस्य भोगः सिध्यतीति समर्थनम् ॥ ६ ॥

'अत एव च अनन्याधिपतिः' इति सप्तमेऽधमानियम्यत्वनये मुक्तानामधमनियम्यत्वराहित्येन भोगसमर्थनम् ॥ ७ ॥

योगसप्तकात्मकेऽष्टमे भोगोपपत्तिनये मुक्तस्य भोगानुपपत्तिनिरासः ॥

'अभावं बादरिराह ह्येवम्' इत्यादिमयोगे बादरिमते मुक्तानां बाह्यदेहाभावे 'अशरीरो वा व' इत्यादिश्रुतिप्रमाणोक्तिः ॥

'भावं जैमिनिर्विकल्पाम्नानात्' इति द्वितीययोगे जैमिनिमते कादाचित्कबाह्यदेहसद्भावे 'स वा एषः' इति श्रुतिप्रमाणोक्तिः ॥

'द्वादशाहवदुभयविधं बादरायणोऽतः' इति तृतीययोगे प्रामाणिकत्वेन तयोः स्वमतत्त्वप्रदर्शनेनाविरोधोक्तिः ॥

'तन्वभावे सन्ध्यवदुपपत्तेः' इति चतुर्थयोगे देहाभावपक्षे देहाभिमानस्यापि[प्य]सिद्धत्वेन सुप्तिवद्भोगो न स्यादिति बाधकतर्कस्य स्वप्नावस्थायां व्यभिचारसमर्थनम् ॥

'भावे जाग्रद्वत्' इति पञ्चमयोगे देहसद्भावपक्षे भोगोपपत्त्युक्तिः ॥

'प्रदीपवदावेशः, तथा हि दर्शयति' इति षष्ठयोगे देहे सति दुःखं स्यादिति बाधकतर्कस्य व्याप्त्यभावोपपादनाय कर्मारब्धदेहस्यैव दुःखजनकत्वं न देहमात्रस्येति स्वेच्छानुगृहीतदेहस्य कर्मानारब्धत्वादेव दुःखाभाव इत्यन्यथोपपत्त्युक्तिः । सुखमात्रभोक्तृत्वे 'तीर्णो हि' इत्यादिश्रुतिप्रमाणोक्तिश्च ॥

'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' इति सप्तमयोगे 'तीर्णो हि' इत्यादिश्रुतेर्मुक्तपरत्वसमर्थनम् ॥ ८ ॥

चतुर्योगे नवमे भोगेयत्ताधिकरणे मुक्तस्य भोगेयत्तासमर्थनम् ॥

'जगद्व्यापारवर्जम्' इति प्रथमयोगे जगत्सृष्ट्यादिव्यापारव्यतिरिक्त-तत्तद्योग्यकामावाप्तिप्रतिज्ञा ॥

'प्रकरणादसन्निहितत्वाच्च' इति द्वितीययोगे तदुपपादनाय 'सर्वान् कामान्' इत्यादिश्रुतेः सङ्कुचितार्थत्वोक्तिः ॥

'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः' इति तृतीय-योगे मुक्तानां जगद्व्यापाराभावे 'ता यो वेद' इति श्रुतिविरोधाक्षेपे तस्याश्चतुर्मुख-परत्वेन समाधानोक्तिः ॥

'विकारावर्ति च तथा हि दर्शयति' इति चतुर्थयोगे मुक्तदेवादीनां भोगमर्यादोक्तिः ॥ ९ ॥

योगद्वयात्मके दशमे भोगसामान्याधिकरणे भोगादिना वृद्धिह्रासनिरास-समर्थनम् ॥

'स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने' इति प्रथमयोगे मुक्तानां वृद्धिह्रासाभावे विद्वत्प्रत्यक्षादिप्रमाणोक्तिः ॥

'भोगमात्रसाम्यलिङ्गाच्च' इति द्वितीययोगे कादाचित्कभोगविषयस्य वृद्ध्यधिकरणत्वोक्तिः ॥ १० ॥

'ओं अनावृत्तिः शब्दादनावृत्तिश्शब्दात्' इत्येकादशेऽनावृत्त्यधिकरणे परं ब्रह्म प्राप्तस्य मुक्तस्य भोगान् भुञ्जानस्य पुनरावृत्त्यभावसमर्थनमिति मङ्गलम् ॥ ११ ॥

भस्मावशेषिताघाय भस्माभिद्व्यमदच्छिदे ।
अस्माकमिष्टगुरवेऽप्यस्माख्याधये (?) नमः ॥

कृष्णावधूतसम्भूता तृष्णाच्छेदकरी कृतिः ।
कृष्णात्मेशार्पणास्वाद्या पुष्णातु सुधियां मुदम् ॥

इति श्रीकृष्णावधूतपण्डितकृतौ सूत्रार्थामृतलहर्यां सङ्क्षेपेण तात्पर्यानुवादरूप-
कक्ष्याविभागे चतुर्थाध्यायस्य चतुर्थः भोगपादः समाप्तः ॥
फलाध्यायश्चतुर्थः ब्रह्ममीमांसासूत्रसन्दर्भश्च:[1] समाप्तः ॥

---

1. अस्य फलश्रुतिर्ब्रह्माण्डपुराणे श्रवणफलतारतम्यविचारे नारदाम्बरीष-संवादे नारदः—

व्यासोक्तब्रह्मसूत्राणां सकृदावर्तनान्नृप ।
गायत्र्याः सर्ववेदानां सहस्रावृत्तिपुण्यभाक् ॥
अर्थतात्पर्यसहितं सूत्रपाठं पठन् द्विजः ।
दशसाहस्रगायत्रीजपपुण्यफलं लभेत् ॥
सम्भवेत् सिद्धसंकल्पः परत्राप्यत्र किं पुनः । इति ॥

श्रीभविष्योत्तरपुराणे:—

पूर्णप्रज्ञकृतं भाष्यं सूत्राणां प्रपठन् कलौ ।
कृतादिषु तपोयज्ञदानाद्यैर्यत्फलं लभेत् ॥
सर्वान् कामानिहावाप्य मुक्तोऽभीष्टं समश्नुते । इति ॥

# INDEX—GLOSSARY

| TERM. | PAGE. | MEANING. |
|---|---|---|
| | **अ** | |
| अङ्गदेवतोपासन | 57 | Worship of Particular gods as attached to specific limbs of the supreme Lord |
| अत्ता | 7 | The supreme Lord |
| अधिकरण | 6 | Section of the Vedānta-Sūtras |
| अन्तर्यामी | 8 | Immanent Lord |
| अध्ययन | 59 | Study of scripture according to orthodox tradition |
| अधमानियम्यत्व | 73 | State of being controlled by inferiors, to which released souls are *not* subjected |
| अनुव्याख्यान | 16 | *Magnunu opus* of Madhva |
| अबिम्बोपासन | 56 | Worship of the Lord contemplated as *other* than the Immanent (*i.e.*, in idols, images etc) |
| अवसरसङ्गति | 5 | Contextual connection controlled by the criterion of relevancy |
| अविरोधाध्याय | 19 | 2nd chapter of the Vedānta Sūtras devoted to refutation of systems opposed to the Vedānta |
| असत् | 21 | The Void-Fontal Nullity |
| असुरस्वभाव | 62 | Demoniacal Nature |
| | **आ** | |
| आनन्दतीर्थ | 1 | Founder of Dvaita Philosophy |
| आश्मरथ्य | 9, 18 | A philosophic system-builder |
| आसन | 66 | Yogic posture |

| Term. | Page. | Meaning. |
|---|---|---|
| | | ई |
| ईशान | 13 | A term that refers to Viṣṇu |
| ईश्वरानुग्रह | 63 | Grace of the Lord . |
| | | उ |
| उत्क्रांति | 67 | Flight of the self from the body |
| उपासनापाद | 49 | 3rd quarter of the 3rd chapter of the Vedānta Sūtras devoted to worship of the Lord |
| | | औ |
| औडुलोमि | 18 | A philosophic system-builder |
| | | क |
| कक्ष्या | 4 | Topical unit |
| | | का |
| कार्ष्णाजिनि | 40 | A philosophic system-builder |
| काशकृत्स्न | 18 | Do. |
| कामचार | 60 | Free-lance Activity |
| काल | 47 | Time (Absolutely Real for Madhva) |
| | | ग |
| गर्भवास | 42 | . Intra-uterine existence |
| गुणोपसंहार | 50 | Lontemplation of the Attributes of the Lord as devotionally focussed on Him |
| गोप्य | 64 | Secret |
| | | गु |
| गुरु | 54 | Spiritual preceptor whose place is supreme in Vedānta |
| | | च |
| चतुर्मुख | 71 | Four-faced Brahmā through-whom alone the supreme Lord has to be reached |

| Term. | Page. | Meaning. |
|---|---|---|
| | | **ज** |
| जगद्व्यापार | 74 | Creation of the universe (Not within competence even of released souls) |
| जन्माद्यष्ट | 48 | Eight determinations like creation-etc. |
| | | **जी** |
| जीवाणुत्व | 32 | Atomicity of the Soul |
| जीवेशभेद | 45 | Difference between the finite self and the Lord—the main philosophic plank of Madhva |
| | | **जै** |
| जैमिनि | 9 | Founder of the system of pūrva. Mīmāmsā |
| | | **द** |
| दहर | 11 | Innermost chamber of heart, the Lord immanent in which is to be meditated on by Yogic practice |
| | | **दे** |
| देवलय | 68 | Absorption of lower deities into the higher ones |
| | | **न** |
| नरक | 41 | Hell |
| | | **पा** |
| पारतन्त्र्य | 34 | Dependence |
| | | **पु** |
| पुरुषाश्मवत् | 25 | Analogy of man lifting stone. |
| | | **पू** |
| पूर्णप्रज्ञ | 75 | Another name of Madhva. |
| | | **पृ** |
| " पृथगुपदेशात् " | 33 | This apothegm proves difference between the finite and the SupremeLord. |

| TERM. | PAGE. | MEANING. |
|---|---|---|
| | | प्र |
| प्रतिबिम्ब | 35 | Image or Reflection. |
| | | प्रा |
| प्राणसंख्या | 36 | Number of breaths. |
| प्राणात्यय | 61 | Danger to life. |
| | | बा |
| बादरायण | 14 | Author of Vedānta-Sūtras. |
| बादरि | 9 | A system-builder. |
| | | ब्र |
| ब्रह्मजिज्ञासा | 3 | Inquiry into nature of Brahman. |
| | | भ |
| भक्ति | 55 | Devotion. |
| भक्तिपाद | 43 | 2nd quarter of the 3rd chapter of Vedānta-Sūtras, devoted to Devotion. |
| भगवदपरोक्ष | 46 | Coming face to face with God in realization. |
| | | भे |
| भेद | 10 | Difference—The basic category of the Dvaita-system |
| | | भो |
| भोगपाद | 72 | 4th quarter of the 4th chapter of Vedānta-Sūtras devoted to Enjoyment of Released Souls. |
| | | मु |
| मुक्तोपासन | 52 | Worship engaged in *even* by released Souls. |
| | | मु |
| मुख्यप्राण | 37 | Main or chief Life-breath (Son of God). |

| TERM. | PAGE. | MEANING. |
|---|---|---|
| | | मा |
| मार्गपाद | 70 | 3rd quarter of the 4th chapter of the Vedānta-Sūtras devoted to the *WAY*. |
| | | मो |
| मोक्ष | 65 | Salvation. |
| | | यो |
| योग | 20 | Patañjali's System of phycho-physical discipline and mind-control. |
| | | ल |
| लक्ष्मी | 69 | Lord's Consort who presides over Prakṛti. |
| | | ली |
| लीला | 23 | Creation is the Lord's play. |
| | | वृ |
| वृत्तिज्ञान | 30 | Sense-knowledge, it has a peculiar connotation in Advaita. |
| | | वै |
| वैशेषिकाधिकरण | 26 | Section devoted to refutation of Vaiśeṣika-system. |
| वैषम्य | 24 | Partiality or Favouritism. |
| | | श |
| शक्तिमत | 29 | A School that derives the universe from force or energy. |
| शरीरोपादान | 38 | Material causes of body (the nervous System). |
| | | शू |
| शून्यमत | 27 | Nihilism. |
| | | श्री |
| श्रीतत्त्व | 53 | Mahālakṣmī (category of). |
| | | श्रु |
| श्रुति | 12 | Scripture. |

| TERM. | PAGE. | MEANING. |
|---|---|---|
| | | **स** |
| समन्वयाध्याय | 2 | Chapter devoted to harmonisation of terms on the Supreme Lord (1st chapter of the Vedānta-Sūtras). |
| समाकर्षाधिकरण | 17 | Section on Indirect harmonisation (Not included in Vijayīndra's count). |
| सर्वावस्थाप्रेरक | 44 | The Lord who energises all the States—waking-sleeping and dreaming. |
| | | **सा** |
| साधनाध्याय | 39 | 3rd chapter of the Vedānta-Sūtras devoted to discussion of means of realization. |
| | | **सु** |
| सुषुप्ति | 15 | State of Sleep. |
| | | **सं** |
| संभूति | 51 | A Special Attribute of the Lord beyond meditational reach of the ordinary. |
| संहारविषयश्रुति | 31 | Scriptural text in which destruction is referred to. |
| | | **स्व** |
| स्वतन्त्रकर्तृत्व | 22 | Independent Doership or Agentship, Attribute of the Supreme Lord. |
| | | **स्वा** |
| स्वातन्त्र्य | 34 | Independence, Attribute of the Supreme Lord. |
| | | **क्ष** |
| क्षपणकाधिकरण | 28 | Section devoted to refutation of Jainism. |
| | | **ज्ञा** |
| ज्ञानपाद | 58 | 4th quarter of the 3rd chapter of Vedānta-Sūtras devoted to exposition of the Nature of Realization. |